* ओंनमः शिवाय *

COMPILED

# ईश्वर प्रार्थना ।

# PRAYER TO GOD

कर्त्ता

कर्मकाण्डप्रचण्डविप्रर्षिहृषीकेशात्मजो दीनानाथशर्मा शास्त्री गाधेयः शिवशक्तिपादाब्जभृङ्गः संस्कृताध्यापको राजकीयपाठशालाफीरोजपुर-नगरे, सनातनधर्म्मप्रबन्धे प्रथमस्थित्यै रजतपदकाधिगन्ता, कर्म्मकाण्डसत्यसिद्ध्यै सुवर्णपदकप्रशंसापत्राधिगन्ता च भगवन्महर्षिवसिष्ठगोत्रोद्भवः ॥

BY

P. DINANATH, SHARMA SHASTRI GADHEYA,

**SANSKRIT TEACHER.**

GOVERNMENT HIGH SCHOOL,

**FEROZEPORE CITY**

AND

*SILVER MADALIST*

FOR

Standing first among Sanatan dharm, essays in India, golden madalist and certificated

**FOR**

Approving the truth of Karmakand or mantra shastra

Printed by Brahmdeva Sharma at the Brahma Press—Etawah.



| प्रथमबार | सम्वत् | मूल्य |
|---|---|---|
| १००० | १९७४ | =) |

# रावणकृतशिवताण्डवस्तोत्रम् ।

श्रीगणेशाय नमः । जटाकटाहसंभ्रमभ्रमन्निलिंपनिर्झरी विलोलवीचिवल्लरीविरा-
जमानमूर्धनि । धगद्धगद्धगज्ज्वलल्ललाटपट्टपावके किशोरचन्द्रशेखरे रतिः प्रतिक्षणं
मम ॥ १ ॥ धराधरेन्द्रनन्दिनीविलासबन्धुबन्धुरस्फुरद्दिगन्तसन्ततिप्रमोदमानमानसे ।
कृपाकटाक्षधोरणीनिरुद्धदुर्धरापदि क्वचिच्चिदम्बरे मनो विनोदमेतु वस्तुनि ॥ २ ॥
जटाभुजङ्गपिंगलस्फुरत्फणामणिप्रभाकदम्बकुङ्कुमद्रवप्रलिप्तदिग्वधूमुखे । मदान्धसि-
न्धुरस्फुरत्त्वगुत्तरीयमेदुरे मनो विनोदमद्भुतं बिभर्तु भूतभर्तरि ॥ ३ ॥ सहस्रलोचन-
प्रभृत्यशेषलेखशेखरप्रसूनधूलिधोरणीविधूसराङ्घ्रिपीठभूः । भुजङ्गराजमालया निबद्ध-
जाटजूटकः श्रियै चिराय जायतां चकोरबन्धुशेखरः ॥ ४ ॥ ललाटचत्वरज्वलद्धनञ्जय-
स्फुलिंगभानिपीतपञ्चसायकं नमन्निलिम्पनायकम् । सुधामयूखलेखया विराजमान-
शेखरं महाकपालिसम्पदे शिरो जटालमस्तु नः ॥ ५ ॥ करालभालपट्टिकाधगद्धगद्धग
ज्ज्वलद्धनञ्जयाधरीकृतप्रचण्डपञ्चसायके । धराधरेन्द्रनन्दिनीकुचाग्रचित्रपत्रकप्रकल्प-
नैकशिल्पिनि त्रिलोचने मतिर्मम ॥ ६ ॥ नवीनमेघमण्डलीनिरुद्धदुर्धरस्फुरत्कुहूनिशी-
थिनीतमःप्रबन्धबन्धुकन्धरः । निलिम्पनिर्झरीधरस्तनोतु कृत्तिसिन्धुरः कलानिधान-
बन्धुरः श्रियं जगद्धुरन्धरः ॥ ७ ॥ प्रफुल्लनीलपंकजप्रपञ्चकालिमच्छटाविडंबिकंठक-
न्धरारुचिप्रबन्धकन्धरम् । स्मरच्छिदं पुरच्छिदं भवच्छिदं मखच्छिदं गजच्छिदान्धक-
च्छिदं तमन्तकच्छिदं भजे ॥८॥ अगर्वसर्वमङ्गलाकलाकदम्बमञ्जरीरसप्रवाहमाधुरीविजृ-
म्भणामधुव्रतम् । स्मरान्तकं पुरान्तकं भवान्तकं मखान्तकं गजान्तकान्धकान्तकं तम-
न्तकान्तकं भजे ॥ ९ ॥ जयत्वदभ्रविभ्रमभ्रमद्भुजङ्गमस्फुरद्धगद्धगद्विनिर्गमत्करालभाल-
हव्यवाट् । धिमिद्धिमिद्धिमिध्वनन्मृदङ्गतुङ्गमङ्गलध्वनिक्रमप्रवर्तितप्रचण्डताण्डवः शिवः
॥ १० ॥ दृषद्विचित्रतल्पयोर्भुजङ्गमौक्तिकस्रजोर्गरिष्ठरत्नलोष्ठयोः सुहृद्विपक्षपक्षयोः ।
तृणारविन्दचक्षुषोः प्रजामहीमहेन्द्रयोः समं प्रवर्तयन्मनः कदा सदाशिवं भजे ॥ ११ ॥
कदा निलिम्पनिर्झरीनिकुञ्जकोटरे वसन्विमुक्तदुर्मतिः सदा शिरःस्थमञ्जलिं वहन् ।
विमुक्तलोललोचनो ललामभाललग्नकः शिवेति मन्त्रमुच्चरन्कदा सुखी भवाम्यहम् ॥१२॥
इमं हि नित्यमेवमुक्तमुत्तमोत्तमं स्तवं पठन्स्मरन्ब्रुवन्नरो विशुद्धमेति सन्ततम् । हरे
गुरौ सुभक्तिमाशु याति नान्यथा गतिं विमोहनं हि देहिनां सुशङ्करस्य चिन्तनम्॥१३॥
पूजावसानसमये दशवक्त्रगीतं यः शम्भुपूजनमिदं पठति प्रदोषे । तस्य स्थिरां रथग-
जेन्द्रतुरङ्गयुक्तां लक्ष्मीं सदैव सुमुखीं प्रददाति शम्भुः ॥ १४ ॥ इति श्रीरावणविरचितं
शिवताण्डवस्तोत्रं सम्पूर्णम् ॥



ओ३म्-नमः शिवाय ।

हरिः ओं तत्सद्ब्रह्मणे नमः ।

# ईश्वरप्रार्थना ।

## PRAYER

हिन्दुभिः क्रिश्चनैश्चापि यवनैरुतकेशिभिः ।
पारसीकैः यहूद्याद्यैः प्रार्थ्येशं प्रार्थ्य लिख्यते ॥ १ ॥
प्रार्थनार्थोऽस्याः किं तत्वं शक्तिरस्याश्च कीदृशी ।
कथमेषा विधातव्या भवेऽस्मिन् सर्वमानवैः ॥ २ ॥
धर्मराज्यस्य रक्षार्थं प्रत्यहं निजकर्मसु ॥
निराकर्तुं नृणां रोगान् महारोगांश्च प्राणिनाम् ॥ ३ ॥
आधिव्याधिपरितापे जातिविध्वंसकर्मणि ॥
जातिगौरवसम्बन्धे भवोन्नत्यै च सा कथम् ॥ ४ ॥
इति बुद्ध्या विनिश्चित्य युक्त्या शास्त्रोक्तमर्मभिः ॥
कृतेऽखिलमनुष्याणां प्रार्थनेशस्य साध्यते ॥ ५ ॥
शक्तिर्मे यद्यपि नास्ति साधितुं विषयं परम् ॥
ईश्वराधारमाधाय तथापि यत्यते मया ॥ ६ ॥

Prayer:-The meaning the reality and the power of prayer; its place and Value to the individual, to the church to the state in the every day affairs of life in the healing of sickness and disease in times of distress and of national danger and in, relation to national ideals and to worldly progress

**प्रार्थनार्थः THE MEANING OF PRAYER** भगवतोऽनामवस्तुयाञ्चा, तन्महिमख्याति, स्तद्गुणवर्णनम्, तदग्रे नम्रताविष्करणम् तत्स्मरणञ्च प्रार्थनेत्यभिधीयते सा च तत्सम्मानेन बहुमानेन प्रीत्या तद्विरहे दुःखानुभवेन इतरविचिकित्सया तद्भावभावनया तदर्थप्राणस्थित्या चापि बाहुल्येन सम्भवति ॥

Prayer:-The act of praying, supplicating or act of one who prays a petition, supplication. entreaty, a solemn petition for benifits addressed to the supreme being, a formula of church service or worship, public or private, that fact of written petition or memorial which specifies be thing desired to be done or granted.

## तत्वञ्चास्या: THE REALITY OF PRAYER:-

निजान्तःकरणशुद्धिः यतो भगवत आराधनेन मलविक्षेपनिराकरणद्वारा जीवस्यात्मनि शुद्धिर्जायते अथापि श्रुतिरपि एष उह्यॆव साधु कर्म्म कारयति तं यमेभ्यो लोकेभ्य ऊर्ध्वमुन्निनीषते एष उह्यॆवासाधु कर्म्म कारयति तं यमेभ्यो लोकेभ्योऽधोनिनीषते। स्मृतिरपि श्रुत्यर्थमेवानुवदति अज्ञो जन्तुरनीशोयं आत्मनः सुख दुःखयोः ईश्वरप्रेरितो गच्छेत् स्वर्गं नरकमेववा ॥ महाभारतेऽपिमोक्षधर्मे, नारायणेन दृष्टश्च प्रतिबुद्धोभवेत्पुमान् ॥ एवमात्मेच्छया राजन् प्रतिबुद्धो न जायते इत्येवमीश्वराधीनत्वाज्जीवानां बन्धमोक्षयोरतस्तस्यैवाराधनं कर्त्तव्यम् ॥ अहिताचरणात् नहि स्वतन्त्रः सन् स्वकीयमहितमाचरेत् कोह्यात्मानं पातयितुमच्छति जानन्नपि अनिष्टफलेषु कर्मसु प्रवर्त्तमानश्चायंस्वकीयं पारतन्त्र्यमेवावेदयति तथाच भारते दुर्योधनवाक्यम् "जानामि धर्म्मं न च मे प्रवृत्तिर्जानाम्यधर्म्मं न च मे निवृत्तिः। केनापि भूतेन हृदिस्थितेन यथा प्रयुक्तोऽस्मि तथा करोमि। विघ्नबाहुल्यदर्शनाच्च। दृश्यन्तेहिश्रेयः कर्म्मणि प्रवृत्तानां जीवानामाध्यात्मिकाधिदैविकादयो बहवो विघ्नाः प्रादुर्भवन्तः तेहिचिरेणोपार्जितानामपि भोगापवर्गफलानां सुकृतानां क्षयेनैव नैष्फल्यमुत्पादयन्ति इत्युभयथापि परतन्त्रस्य जीवस्योक्तदोषद्वयस्य निवृत्तिरीश्वरप्रसादादेव जायते परमेश्वराराधनेनाशेष दुरितक्षये शुद्धान्तःकरणः स्वयमहिताचरणान्निवर्तते ॥ तत्कृपाकटाक्षतश्चास्यसर्वेऽप्याध्यात्मिकादयो विघ्ना नश्यन्ति। विघ्नाभावेचास्य सर्वाणि श्रेयांस्यचिरेण सिध्यन्ति यदुक्तं पतञ्जलिना'ततः प्रत्यक्चेतनाधिगमोऽन्तरायाभावश्च, इति प्रसादश्चेश्वरस्य शास्त्रोक्तविधिना तदाराधनेनैव जायते ॥ यद्यपि सर्वत्र समदर्शिनः परमेश्वरस्याखिलेषु प्राणिषु सम एव प्रसादस्तथापि ईश्वराराधनजनितान्तःकरणशुद्धीनामेव पुरुषाणां तद्ग्रहणयोग्यता भवति। नान्येषामशुद्धान्तःकरणानां पापात्मनां नराणाम् "समोहं सर्वभूतेषु नमेद्वेष्योऽस्तिनप्रियः ॥ ये भजन्तितुमांभक्त्या मयिते तेषु चाप्यहम्" इति भगवद्वचनादेव भगवत आराधनस्य तत्त्वं विज्ञेयम् स्वच्छादर्शवत् सान्निध्यम् भृङ्गीकीटन्यायेन तादृप्यम् ईश्वरकृपया ज्ञानप्राप्त्या प्रत्येककर्म्मसु विवेकः। आत्मशान्तिरात्मावभासादयोपि भगवदाराधनस्य तत्त्वं निश्चेयम् ॥

## शक्तिरस्या: THE POWER OF PRAYER:-

प्रार्थनायां शक्तिरलौकिकी ॥ मूकं करोतिवाचालं पङ्गुं लङ्घयते गिरिम्। यत्कृपा तमहं वन्दे परमानन्दमीश्वरम् ॥ तत्कृपा च तदाराधनेन जायते इति पूर्वमुक्तमेव यद्यपि जीवस्तत्कृपां तदाज्ञानुसरणप्रवृतेरभ्यर्चनाच्चाप्यधिगच्छति तथापि तदाज्ञानुसरणप्रवृत्तौ तदभ्यर्चने संस्कारोत्पादने च भगवदाराधनमेव प्रधानं कारणं यत्र पूर्वोक्ता शक्तिः तादृश्यात्ताच्छब्द्यम् ॥ ईश्वरो हि सर्वशक्तिमानिति तदाराधनपरोऽपि यथा यथ

तदाराधनेन ज्ञानाधिक्यं लभते तथा तथा ईश्वरकृपया तस्य शक्तिरपि वर्धते मनो वाक्कायकर्मसु आत्मनि च विशेषेण दृश्यते चापि लोके यदीश्वराराधनकराणां हिन्दुशास्त्रप्रणयानां ब्रह्मर्षिवेदव्यासवसिष्ठरामकृष्णनानकादीनां क्रिश्चनमतप्रवर्तकानां युसीप्रभृतीनां यवनमहापुरुषाणां मुहम्मदप्रभृतीनामद्यत्वे जगति लोकोत्तरो विभवः। योगी एकस्थ एव त्रैलोक्यपदार्थानखिलान् त्रिकालिकान् जानाति योगिनामष्टसिद्धयोऽपि भवन्ति ॥ अणिमा महिमा चैव गरिमा लघिमा तथा ॥ प्राप्तिः प्राकाम्यमीशित्वं वशित्वञ्चाष्टसिद्धयः ॥

श्रूयते हि पुरा चण्डकौशिकद्वारा कृतेश्वराराधनप्रसादान्मगधेषु बृहद्रथो नाम राजा जनार्दनस्य जेतारमतुलबलपराक्रमं जरासन्धं नाम तनयं लेभे ॥

दशरथश्च राजा परिणतवया अपि विभाण्डकमहामुनिसुतस्य ऋष्यशृङ्गस्य प्रसादात्कारिते पुत्रेष्टियज्ञे ईश्वराराधने नारायणभुजानिवाप्रतिहतानुदधीनिवाक्षोभ्यानवाप चतुरः पुत्रान् ॥ अन्ये चापि राजर्षयस्तपोधनानाराध्यस्वाभीष्टफलं लेभिरे यदा ईश्वराराधकानामेतादृशी शक्तिस्तदा तदाराधने कीदृशी भविष्यतीति स्वयमेव विद्वांसो ज्ञास्यन्ति ॥

किं बहुना ईश्वराराधने या या शक्तिरस्ति तस्यास्तस्या वर्णनाय मे समग्रोपि प्रस्तावो नालं परं या या शक्तिर्लोके दृश्यते सा सा सर्वापि ईश्वराराधनेन जायते इत्युक्त्वा विरमामि ॥

**तत्समयः** । ब्राह्मे मुहूर्त्ते उत्थाय शौचादिकमनुष्ठाय कृतस्नानेन ध्यानान्तरराहित्येन सा कार्या अस्मिन्समये संस्काराः शुद्धा भवन्ति रात्रौ निद्रायां सुखासीनः अन्तरात्मा सांसारिककर्मण्यावृत्त्या आत्मगत्यै दुर्घटे ब्रह्मणि सम्यक् लगति सर्वकर्मभ्यश्च पूर्वमेतत्करणेन ईश्वराराधनस्य महत्त्वं व्यज्यते तद्वशा च न प्रसरति । ईश्वराराधनमेव जीवस्य मुख्यं कर्मेति प्रकटीभवति यावद्दिनकार्याणि ईश्वराराधनेन विवेकमधिगम्य मनुष्यः यथायथं करोतीति ॥

**प्रार्थना** । *PRAYER*:— भूः पादौ यस्य नाभिर्वियदसुरनिलश्चन्द्रसूर्यौ च नेत्रे । कर्णावाशाशिरोद्यौर्मुखमपि दहनो यस्य वास्तेयमब्धिः ॥ अन्तस्थं यस्य विश्वं सुरनरखगगोभोगिगन्धर्वदैत्यैश्चित्रं रंरम्यते तं त्रिभुवनवपुषं विष्णुमीशं नमामि ॥ स्थाने हृषीकेश तव प्रकीर्त्या जगत्प्रहृष्यत्यनुरज्यते च । रक्षांसि भीतानि दिशो द्रवन्ति सर्वे नमस्यन्ति च सिद्धसंघाः । कस्माच्च ते न नमेरन्महात्मन् गरीयसे ब्रह्मणोप्यादिकर्त्रे । अनन्त देवेश जगन्निवास त्वमक्षर, सदसत्तत्परं यत् ॥ त्वमादिदेवः पुरुषः पुराणस्त्वमस्य विश्वस्य परं निधानम् । वेत्तासि वेद्यञ्च परं च

धाम त्वया ततं विश्वमनन्तरूप ॥ वायुर्यमोऽग्निर्वरुणः शशाङ्कः प्रजापतिस्त्वं प्रपिता-महश्च । नमो नमस्तेऽस्तु सहस्रकृत्वः पुनश्च भूयोऽपि नमो नमस्ते ॥ नमः पुरस्ताद-थपृष्ठतस्ते नमोस्तुते सर्वत एव सर्व । अनन्तवीर्यामितविक्रमस्त्वं सर्वं समाप्नोषि ततोऽसि सर्वः ॥ पितासि लोकस्य चराचरस्य त्वमस्य पूज्यश्च गुरुर्गरीयान् । नत्व-त्समोऽस्त्यभ्यधिकः कुतो वा लोकेत्रयेप्यप्रतिमप्रभावः ॥ येन जातं जगत्सर्वं यस्मि-न्नेव विलीयते । येनेदं धार्यते विश्वं तस्मै ज्ञानात्मने नमः ॥

**फलमस्याः,** *CONSEQUENCE OF PRAYER* अभ्युदयनिः-श्रेयससिद्धिः Hoppiness and Absoluition

**ईश्वरसिद्धिः** *EXISTENCE OF GOD* स न मन्येत आगन्तू-निवार्थान् प्रत्यक्षद्वश्यमेतद्भवति इति नास्तिकं निराकुर्वन् ईश्वरसद्भावे प्रमाणं दर्शयति । कार्या योजनधृत्यादेः पदात्प्रत्ययतः श्रुतेः । वाक्यात्संख्याविशेषाच्च साध्यो विश्वविदव्ययः ॥ जगज्जन्मादिहेतुत्वात् यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्मेति ॥

नाकारणं दृष्टविरोधात् कारणादानप्रवृत्तेश्च सकारणस्य जगतः कर्तृभूतस्य ईश्वर स्वरूपं बोधयन्ति शास्त्रकाराः ॥ तमीश्वराणां परमं महेश्वरं तं दैवतानां परमञ्च दैवतम् ॥ पतिं पतीनां परमं परस्ताद् विन्दाम देवं भुवनेशमीड्यम् ॥ विश्वस्यैकं परिवेष्टितारं ईशं ज्ञात्वा अमृता भवन्ति । भीषास्माद् वातः पवते भीषोदेति सूर्यः । भीषादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः ॥ य ईशेऽस्य द्विपदश्चतुष्पदः । ईशावास्यमि-दंसर्वं यत्किञ्चिज्जगत्यां जगत् । तेन त्यक्तेन भुञ्जीथाः मागृधः कस्य स्विद्धनम् ॥ ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥ क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः ॥

**प्रत्येकमनुष्येण स कथमाराध्यः** *ITS PLACE AND VALUE TO THE INDIVIDUALS.*

सुखस्य दुःखस्य न कोपि दाता परो ददातीति कुबुद्धिरेषा ।
अहं करोमीति वृथाभिमानः स्वकर्मसूत्रग्रथितो हि लोकः ॥

स्वयं हि भुज्यतेऽनेन फलं स्वस्यैव कर्म्मणः, एक एव जनिं याति एक एव च पञ्चताम् ॥

एकश्च भुङ्क्तेदेही निजकर्मफलं सदा ॥ प्रधानश्च सर्वकर्मसु ईश्वराराधनमेवेति प्रत्येकात्मना सांसारिकसम्बन्धिषु ममतां विहाय परमसहायकः सोऽवश्यमाराध्यः ॥ यद्वा नायमत्यन्तसंवासो लभ्यते येन केनचित् ॥ अपि स्वेन शरीरेण किमुतान्येन केनचित्॥ आत्मैवह्यात्मनो बन्धुरात्मैवह्यात्मनो रिपुः॥ तस्मादात्मोन्नतिं कर्तुं परमात्मा-

नमामहं ॥ मृतं शरीरमुत्सृज्य लोष्ठकाष्ठसमं क्षितौ । विमुखा बान्धवा यान्ति धर्म्मस्तमनुगच्छति॥ एक एव सुहृद्धर्मो निधनेऽप्यनुयाति यः॥ शरीरेण समं नाशं सर्वमन्यत्तु गच्छति ॥ प्रधानश्च सर्वधर्मेषु ईश्वराराधनमिति सर्वैरयं प्रभुर्नारायणोऽवश्यमाराध्यः येन प्रत्येकमनुष्यात्मनि कृतज्ञता प्रसरेत् कृतघ्नता दूरीभवेत् येन ज्ञानवान् भवेत् अरोयेन मुक्तिं लभेत येन तद्भयं मत्वा सत्कर्म्माण्येव कुर्यात् । अन्तःकरण शुद्धिराध्यात्मिक विघ्ननाशः स्यात् । पतञ्जलिमुनिनोक्तम् प्रत्यक्चेतनाधिगमोऽन्तरायाभावश्च स्यात् ॥ समस्तेषीश्वरस्य तत्प्रसादग्रहणयोग्यता ईश्वराराधनशुद्धान्तःकरणानामेव भवति ॥ यद्वा सूत्राणां शुक्लत्वे परस्परशुक्लत्वं स्वयमेव सम्पद्यते इति प्रत्येकमनुष्येण कृते ईश्वराराधने समष्टिरूपे तत्परमोपकारि स्वयमेव कृतं स्यात् यद्वा मर्यादापरमानन्दश्च तदा दृश्यते यदा प्रत्येक मनुष्यः प्रत्येकशाखायां निजकर्माणि सम्यक्तया विवेकेन च करोति कर्मणां सम्यक्तया करणं विवेकाधिगमश्च तदा उत्तरोत्तरं जीवेन प्राप्यन्ते यदास्य ईश्वराराधनेन अन्तःकरणस्य मलविक्षेपनिराकरणं भवति ईश्वराराधनेन तत्प्रसादग्रहणयोग्यो भूत्वा च उत्तरोत्तरं ज्ञानमधिगच्छति यद्वा वयं सर्वे तेनैवोत्पादिताः तद्दत्तान् पदार्थान्सर्वे आस्वादयामः सर्वेषामेव स पिता इति सर्वैरेवावश्यमाराध्यः सर्वैर्मिलित्वापि तदाराधनं मन्दिरे चर्चे मस्जिदसंज्ञके वा तदाराधनं श्रेयस्करं दृश्यते येन बाला अपि तत्पथे तान् दृष्ट्वा सुखेन प्रसरन्ति न बिभ्यन्ति च तदन्ये अनुपस्थितिभिया जातिधिक्कारभिया च ईश्वराराधनप्रसक्ताः सम्यगेव कुर्वन्ति ॥ एतत्प्रकारफले पूर्ववदेव ॥

**धर्म्मे भगवदाराधनस्य कथंस्थितिः ITS PLACE AND VALUE TO THE CHURCH** .यस्य स्मरणमात्रेण जन्मसंसारबन्धनात् । विमुच्यते नमस्तस्मै विष्णवे प्रभविष्णवे ॥ वैशम्पायन उवाच-श्रुत्वा धर्म्मानशेषेण पावनानि च सर्वशः । युधिष्ठिरः शान्तनवं पुनरेवाभ्यभाषत ॥ युधिष्ठिर उवाच-किमेकं दैवतं लोके किं वाप्येकं परायणम् । स्तुवन्तः किं किमर्चन्तः प्राप्नुयुर्मानवाः शुभम् ॥

**को धर्म्मः सर्वधर्म्माणां भवतः परमो मतः ।** किं जपन्मुच्यते जन्तुर्जन्मसंसारबन्धनात् ॥ भीष्म उवाच-जगत्प्रभुं देवदेवमनन्तं पुरुषोत्तमम् । स्तुवन्नामसहस्रेण पुरुषः सततोत्थितः ॥ तमेव चार्चयन्नित्यं भक्त्या पुरुषमव्ययम् । ध्यायन्स्तुवन्नमस्यंश्च यजमानस्तमेव च । अनादिनिधनं विष्णुं सर्वलोकमहेश्वरम् । लोकाध्यक्षं स्तुवन्नित्यं सर्वदुःखातिगो भवेत् ॥ ब्रह्मण्यं सर्वधर्मज्ञं लोकानां कीर्त्तिवर्धनम् । लोकनाथं महद्भूतं सर्वभूतभवोद्भवम् ॥

एषमे सर्वधर्म्माणां धर्म्मः परमोमतः। यद्भक्त्या पुण्डरीकाक्षं स्तवैरर्चेन्नरः सदा॥ परमं यो महत्तेजः परमं यः परायणम्। पवित्राणां पवित्रं यो मंगलानाञ्च मङ्गलम्॥ दैवतं देवतानाञ्च भूतानां योऽव्ययः पिता। यतः सर्वाणि भूतानि भवन्त्यादियुगागमे॥ यस्मिंश्च प्रलयं यान्ति पुनरेव युगक्षये॥ इतिभीष्मपितामहोक्तदिशा धर्म्मेषु सर्वोत्तमधर्म्मस्य भगवदाराधनस्य धर्म्मे महत्वं प्रकटयामः धर्म्मो हि यतोऽभ्युदयनिःश्रेयससिद्धिः स ईश्वरप्रार्थनयैव जनानामभ्युदयो जायते मुक्तिश्चापि तयैवेति संसारमात्रस्येतिहासेषु पठामः इति सत्यं भगवदाराधनं परमं धर्म्मः यद्वा श्रूयतां धर्म्मसर्वस्वं श्रुत्वाचैवावधार्य्यताम्। आत्मनः प्रतिकूलाणु परेषां न समाचरेत्। इत्युक्तदिशा यदि वयं कस्मैचित् सर्वस्वं ददामः तदुन्नतिकराणि च साधनानि सम्पादयामः परं सत्रास्मत्कृतज्ञो न भवेत् न चापि चास्मान् स्मरेत् तदास्माकं मनसि कीदृशो भावो जायते इत्यपि सर्वस्वप्रदो भगवान् जीवैरवश्यमाराध्यः स परमो धर्म्मः॥ ईश्वरस्य ज्ञानबलमन्तरा यमज्ञो जीवः, अणोरणीयांसमहतो महीयांसं धर्म्मं वक्तुञ्चापि न क्षमः। अथापि क्षुरनिशितधारे धर्म्मपथे चलन् कामादिशत्रुभिः विघ्नैश्चापि प्रतिहतः स्खलितो भवति इतिज्ञानप्राप्त्यै विघ्नविनाशाय चावश्यमीश्वर आराध्यः ईश्वराराधका एव जगति प्रायः सर्वे धर्मप्रवक्तारो जाताः ये चापि भिन्ना अन्ये धर्माभासप्रवक्तारः श्रूयन्ते तत्रापि जन्मान्तरेश्वराराधनंतज्जन्मनि वा पूर्वकृतेश्वराराधनमेव धर्मप्रवक्तृत्वे हेतुः यद्वा ईश्वरेण साक्षादन्यैश्चापीश्वरभक्तैः प्रतिपादितधर्माङ्गानामेकेषां पालनम् परमेष धर्माभासः धर्मप्रवक्तृत्वञ्च क्षणिकम् ग्रीष्मे कुसरितइव सद्यो नष्टम् नश्यति नाशमेष्यति वा स्थायीधर्मः धर्मप्रवक्तृत्वञ्च ईश्वरस्य तद्भक्तानामेव वा सर्वज्ञतया सर्वशक्तिमत्त्वाच्चेशस्य तस्यैव धर्मप्रवक्तृत्वेऽधिकारः स चैव धर्मो सदा स्थायी अहरहः सन्ध्यामुपासीत।

**ईश्वराराधनस्य राज्ये स्थितिः। ITS PLACE AND VALUE TO THE STATE** नराणाञ्च नरेन्द्रोहमिति गीताकारोक्तदिशा राजा ईश्वरांशरूपस्तत्प्रतिनिधिश्छायारूपो वा अंशः प्रातिनिध्यं छाया वा कथं तिष्ठति तस्य तद् विना इति इतीश्वरः राज्ञाऽवश्यमाराध्यः यदा जीवोल्पज्ञ इति राजापि जीवत्वेनाल्पज्ञः न्यायकर्मणि प्रजाशासने वा ईश्वरज्ञानबलाधारं विना प्रायः स्खलति इत्यपि नृपेणेश्वर अवश्यमाराध्यः येन स ज्ञानी सन् प्रजां सम्यक् शासयेत् राज्यञ्च तस्य निष्कण्टकं स्यात् प्रजापि यदास्य ईश्वरविमुखा भवति तदा राज्ये अतिवृष्टिरनावृष्टिः शलभाश्मपतनादयः महाभूकम्पमहामारीअल्पमृत्युरकालमृत्युघोरयुद्धदुर्भिक्षाद्य उत्पाताः प्रसरन्ति। जीवाश्च स्वच्छन्दतया यानि कानिचित्कर्माणि कुर्वन्ति व्यसनेष सक्ता महादुःखिनो भूत्वाऽन्ते घोरनरके पतन्ति। यथा शिष्या गुरुं विना

प्रजा राजानं विना न स्थातुं शक्नुवन्ति एवमेव प्रजा राज्ये ईश्वराराधनमन्तरा सुखा-ढ्या न भवति इति महोत्पातशान्त्यर्थं राज्यनिष्कण्टकतार्थं प्रजासुखाय च राज्ये ई-श्वरः सर्वैराराध्यः। ईश्वराराधनकृपयैव सुरराज्यध्वंसकर्ता वृत्रासुरो हतः रामे-णापि ईश्वरप्रभावेणैव सुवर्णलङ्काधीशो रावणो जितः शान्तनो राज्ये द्वादशवर्षं मेघो-न ववर्ष परमेश्वराराधकतपस्विऋष्यशृङ्गगमनमात्रेण जातमिति राज्यसुखाय प्रजया नृपेण च ईश्वरोऽवश्यमाराध्यः येन प्रजानृपयोः परस्परं प्रेम पितृपुत्रयोः प्रकृतिपर-मेश्वरयोर्दम्पत्योरिव वा स्यात् राजा च प्रजाशासनमीश्वरो विश्वशासनमिव दया न्यायं कुर्य्यात् ॥

## प्रतिदिनं जीवकर्मसु प्रार्थनायाः स्थितिः ITS PLACE AND VALUE IN EVERY DAY AFFAIRS OF LIFE

यज्ञानां जपयज्ञोऽस्मि जपयज्ञश्च प्रतिश्वासमीश्वरस्मरणम्। जीवो यत्र श्वासग्रहणमपि ईश्वरस्मरणेन तद्दत्तवायुग्रहणे तत्कृतज्ञतां प्रकाश्यैव कुरुते स ईश्वराराधनयज्ञोऽपि ईश्वररूप एवेति सदा सर्वकर्मसु ईश्वरं चिन्तयेत् ॥ भगवद्गीता-याम्। येतु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः। तेषामहं समुद्धर्ता मृत्युसंसारसा-गरात्। मय्येव मन आधत्स्व मयि बुद्धिं निवेशय ॥ निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः। तं तमेवेति कौन्तेय! सदा तद्भावभावितः ॥ तस्मात्सर्वेषु कालेषु माम-नुस्मर युध्य च। यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ॥ यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम्। इति भगवद्गीताकारोक्तदिशा प्रतिदिनं प्रत्येककर्मसु भगव-दाराधनस्य महत्त्वं साधयामः सर्वकर्मसु भगवदाराधनरूपे मङ्गले कृते सफलता भ-वति, कृतज्ञता प्रसरति नम्रता जायते अथापि अज्ञो जीवः प्रत्येककर्मसु पूर्वमीश्वर-माराध्य तत्स्मरणेन तज्ज्ञानलवमवाप्य कृत्याकृत्यप्रवृत्तिनिवृत्तिं विवेकद्वारा कुर्वन् सर्व-कर्माणि सम्यक् करोति अन्ते च मोक्षं लभते ॥ "जानामि धर्म्मं न च मे प्रवृत्ति-र्जाना-म्यधर्म्मं न च मे निवृत्तिः। केनापि देवेन हृदिस्थितेन यथा प्रयुक्तोऽस्मि तथा करोमि ॥ इति सर्वकर्म्मसु पूर्वमीश्वरमाराधयेत् येन तेषु तेषु कर्म्मसु शुभ कर्म्मण्येव प्रवृत्ति-मीश्वरकृपया कुर्याद् येनास्याभ्युदयनिःश्रेयससिद्धिः स्यात् ॥

## रोगनाशने महारोगनाशने चास्याः स्थितिः ITS PLACE AND VALUE IN HEALING THE SICKNESS AND DESCASES

उद्यन्नद्य मित्रमह आरोहन्नुत्तरां दिवम्। हृद्रोगं मम सूर्य्य हरिमाणञ्च नाशय ॥ उद्यन्नद्येति मन्त्रोयं सौरः पापप्रणाशनः रोगघ्नश्च विषघ्नश्च भुक्तिमुक्तिफलप्रदः। कुकर्मजा नृणां रोगा यान्ति चोपक्रमैः शमम्। जपैः सुरार्चनैर्होमैः स्वाध्यायैश्च शमो भवेत् ॥

इति श्रुतिस्मृतिकारोक्तदिशा रोगनाशने भगवदाराधनस्यं महत्त्वमुपढौकयामः रोगा महारोगाश्च जनकुकर्मभ्यो जायन्ते आत्मह्रासेन वा बहुशः कुकर्मभूता रोगा-परमसत्कर्मणि ईश्वराराधने कृते सद्यो नाशमुपयान्ति बहुशश्च निजाल्पफलं दत्वा निस्तरन्ति परं परमात्माराधने कृते आत्मनि बलाढये जाते सद्रोगेण यावत्कालं रोगशान्तिर्न स्यादपि तावत्कालं दुःखं नानुभूयते ॥

एकदा नारदो योगी परानुग्रहकाङ्क्षया । पर्य्यटन्विविधान्लोकान्मर्त्यलोकमुपागतः ॥ तत्र दृष्ट्वा जनान्सर्वान्नानाक्लेशसमन्वितान्, नानार्यानिसमुत्पन्नान्पच्यमानान्स्वकर्मभिः केनोपायेन चैतेषां दुःखनाशो भवेद्ध्रुवम्, इति सञ्चिन्त्य मनसा विष्णुलोकं जगाम ह।

तत्र भगवता स्वयमपि नारदेन मर्त्यरोगादिक्लेशनाशाय पृष्टे तेन तेन प्रकारेण व्रतनियमादिना ईश्वराराधनमेव प्रकल्पितम् तदा तदेतिहासेषु पठामो यदीश्वराराध-नेन जनरोगा महारोगाश्च नष्टाः इति रोगनाशायावश्यमीश्वरो बहुलरूपतयाराध्यः तथा तत्र तत्र सर्वैराराधने कृते जनसंस्काराः शुद्धा भवन्ति अद्यापि रोगानां प्रधानकारणं ब्रह्मचर्यराहित्यं परमीश्वराराधकः परमात्मलग्नः स्वेन्द्रियनिग्रहं कुर्वन् ब्रह्मचर्यव्रतं सम्यग् विदधाति येन रोगग्रस्त एव न जायते श्रूयते चापि तपस्विनां योगिनाञ्चापि शतसहस्रवर्षायुः यावज्जीवं रोगराहित्यञ्च । आत्मनि परमात्माराधनेन सत्वोद्रेकेण बुद्धिर्जायते येनात्मा रोगोपरि प्राबल्यं प्राप्य रोगं महारोगञ्चाक्रम्य सद्यो दूरीकरोति॥

## आधिनाशेऽस्याः स्थितिः ITS PLACE AND VALUE IN TIME OF DISTRESS

आधिर्हि मोहपरवशतया जायते ईश्वराराध-नेन जनो आत्मतत्वं विज्ञाय सुखदुःखे समो भवति । "नैव तस्य कृते नार्थो नाकृते-नेह कश्चन, । प्राप्तस्य हानौ प्राप्यस्य चालाभे आधिर्जायते ॥ परमीश्वराराधनेन— "अरक्षितं तिष्ठति दैवरक्षितं सुरक्षितं दैवहतं विनश्यति । जीवत्यनाथोऽपि वने वि-सर्जितः कृतप्रयत्नोऽपि गृहे न जीवति ॥ प्राप्तव्यमर्थं लभते मनुष्यो दैवोपि तं लङ्घयितुं न शक्तः। तस्मान्न शोचामि न विस्मयो मे यदस्मदीयं नहि तत्परेषाम् । इत्यादि तत्वानां मनुष्यस्य ज्ञानं जायते जाते ज्ञाने हानिलाभौ स्वाभाविकौ मन्यते येनाधिरुत्पद्यत एव न उत्पन्नापि ईश्वराराधनेन मोहमयी सद्योऽपसरति यद्वा तावत्कालं जीवः क्षुद्रकर्मख-चितो भवति यावत्कालं परमोश्वस्य लाभो न जायते नापि तस्य परमानन्दरसा-स्वादः परं यदा धर्मे ईश्वराराधनकर्मणि प्रसरति तदेदमेव मे मुख्यं परमसहायकं परमसुखदञ्च कर्मेति विचारयतोऽस्य मनसि सत्वोद्रेको भवति येन क्षुद्रकर्म्मसु हानिलाभौ न गणयते येनाधिप्रसार एव न जायते यद्वाधिरपि कुकर्म्मणां मोहमतयोः जीवन्यूनतायाश्चपरिणामः तानि च सर्वाणि नश्यन्ति कृतज्ञतया सत्वोद्रेकेण ईश्वरकृ-पया ज्ञानलवप्राप्त्या वा मनसो दौर्बल्यं नश्यति आधिश्च मनसो दौर्बल्यस्य परिणामः

यद्वाधिलब्धस्य हानौ प्राप्यस्य चालाभे भवति परमप्राप्यस्य परमात्मनश्च प्राप्त्यर्थं तैदाराधनपथे लब्धे न लाभान्तरमपेक्षते यद्वा अविद्यास्मिता रागद्वेषाभिनिवेशाः पञ्च-क्लेशास्तेनेश्वरे तदाराधके वा न प्रसरन्ति इति आधिनाशाय ईश्वराराधनं परं साधनम्॥

**विजातिविध्वंसभये परमेश्वराराधनस्यावश्यकता ITS PLACE AND VALUE IN NATIONAL DENGER** जातिविध्वंसो हि जाति-भाषाविध्वंसे जात्याचारव्यवहारनाशे जातौ च पापप्रसक्तायां जायते परमीश्वराराधने कृते जनानां बुद्धिः स्वभाषामहत्वं ज्ञात्वा तत्प्रेमासक्ता सती तदध्ययनप्रसक्ता तां रक्षति तां च पठित्वा स्वाचारव्यवहारनिष्ठा भवति येनाकल्पान्तं न नश्यति पापेऽपि जीवानदा प्रसक्ता दृश्यन्ते यदा ईश्वराराधनविमुखा ईश्वरस्य भयं न मन्यन्ते ॥ जातिविध्वंसकर घोरयुद्धश्चापि तदा जायते। जातिसमुन्मूलोन्मूलकः परस्परविरोधश्चापि तदा जायते यदा जनानां बुद्धिरीश्वराराधनराहित्येन मलविक्षेपबहुला भवति कृत्याकृत्यप्रवृत्तिनि-वृत्तिञ्च न जानाति परं सुखाभासप्रदेषु व्यसनेषु आलस्याढ्या निर्बला मूर्खा सती पाप कर्म्मैव कुरुते येन जातिनौकायां पापपूर्णायां जातिर्नश्यति परमीश्वराराधने कृते जनानां बुद्धिर्निर्मला भवति येन ज्ञानद्वारा विवेकमधिगम्य कृत्याकृत्यप्रवृत्तिनिवृत्तिं कृत्वा स त्कर्म्माणि कुर्वन्ति येनोत्तरोत्तरं जातिर्वर्धते ॥ वपुर्नृणामिदं तत्वैः स्थितिं पञ्चात्मकं येगे ॥ वियोगे पञ्चतां धत्ते जनैर्भेदो न विस्तार्य्यः ॥ इत्युक्तदिशा जातिविध्वंसकरे प-रस्परविरोधः परमीश्वराराधनेन ज्ञानवन्तो भूत्वा जना जानन्ति यद्वयं सर्वेऽपि तस्यै-वैकस्य परिपूर्णसच्चिदानन्दस्य पुत्राः इति सर्वैः सहोदरेषु रामलक्ष्मणभरतशत्रुघ्नेष्विव परस्परं प्रेम कार्य्यम् ॥

संहतिः श्रेयसी पुंसां स्वकुलैः स्वल्पकैरपि ॥ तुषेणापि परिभ्रष्टा न प्ररोहन्ति तण्डुलाः। अल्पानामपि वस्तूनां संहतिः कार्यसाधिका ॥ तृणैर्गुणत्वमापन्नैर्बध्यन्ते मत्तदन्तिनः ॥ परिवर्त्तिनि संसारे मृतः को वा न जायते। स जातो येन जातेन याति जातिः समुन्नतिम् ॥ इत्यादिज्ञानमीश्वराराधनेनावाप्य जात्युन्नतिं परमधर्मं मत्वा-जात्युन्नतिं जातिरक्षां वा सम्यक् मनोवाक्कायकर्म्मभिः कुर्वन्ति घोरयुद्धस्य युद्धे पराजयस्य वा कारणमपि परस्परजातिविरोधः पापबाहुल्यं वा विरोधे तूक्तमेव पापा-अपि ईश्वराराधने कृते रविसमुदयेऽन्धंतम इव पलायन्ते पापानां विषया अपि ज्ञा-नरहिता जीवा ईश्वराराधनेन च जीवाः ज्ञानप्रचण्डा भवन्ति पापांश्च न कुर्वन्ति ॥ ई-श्वराराधने कृते जातिविध्वंसकरा विघ्ना नश्यन्ति, तपस्विजातिरावणपीडिता प्रार्थिते श्वरे रामेणरक्षिता देवता अपि राक्षसपीडिता परमेश्वरे प्रार्थिते विष्णुना सदा रक्षिता इतीतिहासेषु पठामः ॥

**जात्यादर्शसम्बन्धेऽस्या स्थितिः** ।*ITS PLACE AND VALUE IN RELATION TO NATIONAL IDEALS.* हिन्दूनां वेदादिशास्त्रविश्वासः रामादिवत्प्रवर्तितव्यं न रावणादिवत्, शिखासूत्रं गोरक्षावर्णा-

श्रमपालनाद्यो जात्यादर्शः क्रिश्चनमतावलम्बिनां होलीबाइबलविश्वासः प्रभुयुसीमहाभागे श्रद्धा तदाज्ञापालनाद्यः।यवनाञ्च कुरानशरीफविश्वासः मुहम्मदाज्ञापालनाद्यौ यद्यपि विभिन्नाः सन्ति तथापीश्वराराधनमभेदेन सर्वेषामेव जात्यादर्शोऽस्ति तस्य च परमादर्शस्य स्थित्यर्थमीश्वराराधनमेव परं साधनम् ॥ यतोगजानां पङ्कमग्नानां गजा एव धुरन्धराः सूर्यस्य प्रकाशाय सूर्यएवालम् यद्वा ईश्वराराधनप्रवृत्तौ ज्ञानं कारण ज्ञानञ्च ईश्वराराधनेनैव जायते मलविक्षेपदूरीभवनेन विवेकेन वा मलविक्षेपदूरीभवनम् विवेकश्चापि ईश्वराराधनाधीनः इति सर्वजातिपरमादर्शस्य ईश्वराराधनस्य स्थित्यर्थमीश्वराराधनमेव परं साधनम् अन्येषामपि वेदादिशास्त्रविश्वासादीनां होलीबाइबलसंज्ञके प्रभुयुस्याज्ञापालने कुरानसरीफविश्वासे मुहम्मदाज्ञापालनेपि हिन्दुक्रिश्चनयवनाज्ञानेनैव तन्महत्वं ज्ञात्वा प्रसरन्ति ज्ञानञ्च तावत्कालं न जायते यावत्कालमीश्वराराधनेन मलविक्षेपव्यावृत्या बुद्धिपरिष्कारो न जायते। अथाप्यन्ये साधारणादर्शा धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः ॥ धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम् ॥ एते सर्वजातिसाधारणदर्शा ईश्वराराधनेन ज्ञानप्राप्त्या जनैःसम्यक्रक्षिता भवन्ति इति सर्वैः साधारणासाधारणदर्शस्थित्यर्थं ईश्वराराधनप्रवृत्यर्थं वा ईश्वराराधनमवश्यमनुष्ठेयम् ॥

## संसारोन्नत्यै परमेश्वराराधनावश्यकता । *ITS PLACE AND VALUE TO WORLD PROGRESS*

संसारोन्नतिकरं वस्तु जातम् विद्या विवेकः पापनिवृत्तिः धर्मप्रवृत्तिः पृथ्वी सम्यग्नशस्या, राज्ञां यथान्यायं प्रजापालनम् धनधान्यसमृद्धिः आयुर्वृद्धिः, ईश्वरभक्तिस्तद्भीतिश्च, पातिव्रत्य प्रचण्डा स्त्रियः वाणिज्यादिव्यवहारे सत्यम् विज्ञानज्ञानम् निरुपद्रवता राजनीतिः मनुष्याणां शारीरिकं मानसिकं वाचिकमात्मिकञ्च बलम्, अहिंसा सत्वोद्रेकः परस्परप्रेमादयः ॥

विद्या ईश्वर ज्ञानं परा विद्या साचापि ईश्वराराधनेनैव जायते यद्वा विद्याशस्त्रस्य शास्त्रस्य द्वे विद्ये प्रतिपत्तये। तयोरुभयोरपि विद्ययोः प्रवृत्तिर्जीवस्य ईश्वराराधनजनितान्तःकरणशुद्धित्वे एव जायते विनेश्वरसहायेन जायमाना अपि विघ्नैरुपहता भवति महाभाष्येऽपि समानमीहमानानाञ्चाधीयानां केचिदर्थेन युज्यन्ते नापरे तत्र ईश्वराराधनेन जनितान्तःकरणशुद्धित्वे प्राक्तनशुभसंस्कार एवं कारणं नान्यत् ईश्वराराधनविमुखांश्च मनुष्यपशून् जगति भ्रष्टान् विलोक्य विद्याधिगमे ईश्वराराधनजनितान्तःकरणशुद्धिःकारणमिति निश्चिनुमः इति विद्या ईश्वराराधनाधारा ईश्वराराधन योग्यतारहितेषु पशुपक्षिषु सर्वथा।तदभावात् ईश्वराराधनयोग्ये मनुष्ये एव तत्सम्भवाच्च इह जन्मनि पूर्वे वा कृतेश्वराराधनेन उत्तरोत्तरज्ञानप्राप्तिर्विद्याधिगमे हेतुःज्ञानाधिष्ठानमीश्वर एव तस्यैव छायया आराधनेन तत्कृपया वा जायते ज्ञानम्।ज्ञानसद्भावे एव च विद्याधिगमः विद्याधिगमे च जीवा कृत्याकृत्यप्रवृत्तिनिवृत्तिं कृत्वा प्रत्येकशाखायां स्वकं कर्म सम्यक् कुर्वन्ति यच्चैव संसारोन्नत्यै परं साधनम्, इति यद्यपि ईश्वराराधनाधाराया विद्याया एव संसारोन्नत्यै कारणत्वे प्रतिपादिते सर्वं साधितम्

तथापि ब्राह्मणाःसमायाता वसिष्ठोपाध्यायात इति विद्याधिगमे येषु संसारोन्नत्यै विशेषानुरोधस्तानविशेषेण प्रतिपादयामः।

**विवेकः**। हेयोपादेयवस्तुज्ञानं विवेकः कृत्याकृत्यप्रवृत्तिनिवृत्तिज्ञानं विवेकः *DISTINGUESHING POWER BETWEEN WRNOG AND W-RIGHT* तथासतिरामादिवत्प्रवर्तितै जगदुन्नतेः परां कोटिमधिरोहति इति हेयवस्तुज्ञानमपि विवेकेनैव जायते परं किमपि दुर्लभं वस्तुविवेकः जनानामन्तःकरणशुद्धित्वे एवोपपद्यते यतो यावत्कालमन्तःकरणस्य मलविक्षेपो न दूरीभवति तावद् विवेकाप्तिर्दुर्घटा यत् ईश्वर एव मलविक्षेपाविषयः सच्चिदानन्दरूपः॥

## पापान्निवृत्तिर्धर्मे प्रवृत्तिः।

येन संसारस्य पतनं भवति दुःखस्य च परा काष्ठा जायते तत्पापाख्यं कर्म्म येन च संसारोन्नतिर्भवति परम सुखञ्च जायते तानि कर्म्माण्येव धर्म्मः परं तेषु कर्म्मसु पापाख्येषु निवृत्तिं धर्म्मकर्म्मसु च प्रवृत्तिं जीवास्तदा कुर्वन्ति यदैतेषामन्तरात्मा ईश्वराराधनेन शुद्धो ज्ञानवांश्च भवति धर्मे ईश्वराराधनस्यावश्यकता विशेषरूपेण पूर्वमपि प्रतिपादिता।

## पृथ्वी सम्पन्नशस्या।

कलावन्नगताः प्राणाः, धर्म्मार्थकाममोक्षाणां प्राणाःसंस्थितिहेतवःइति चतुर्वर्गाधार प्राणानामाधारस्यान्नस्य पृथ्वी सम्पन्नशस्या कारणम् अन्नाद्याधारेणैव मनुष्याणां त्रिविधबलवृद्धिर्भवति सा च पृथ्वीसम्पन्नशस्या तदा भवति यदा ईश्वराराधनेन जना धार्म्मिकाः सन्तः ईश्वरकृतज्ञाः सन्ति जगदाधारीमश्वरञ्च स्वसत्कर्म्मभिःप्रसादयन्ति प्रसादिते चास्मिन् देवा मनुष्याणां सुखाय संसारोन्नत्यर्थं वा ऋतूनां यथायथविकाशेन कालवर्षिणा च पर्जन्येन पृथ्वीं सम्पन्नशस्यां कुर्वन्ति येन भुवि संसारोन्नतिप्रदा धनधान्यसमृद्धिरपि जायते।

## राज्ञां यथान्यायं प्रजापालनम्।

एतदपि संसारोन्नत्यै परं साधनम्। पर्जन्य इवभूतानामाधारः पृथिवीपतिः। अथापि–दस्युभिः पीडिताः सर्वाः प्रजा दुःखं व्रजेदिमाः॥ धूर्तैश्च पापिभिर्नित्यं यदि राजा न पालयेत्। परं सोपि राजा तदैव धर्म्मेण प्रजां पालयितुं पारयति यदास्यान्तःकरणे शुद्धिः ज्ञानमीश्वरभीतिश्च भवति परमन्तःकरणशुद्धिरीश्वरभीतिर्ज्ञानं वा ईश्वराराधनाधारं तस्यैव मलविक्षेपनिराकरणशक्त्या॥

## जनानामायुर्वृद्धिः।

चिरञ्जीवन्त एव जन्म संसारोन्नतिप्रदैःकर्म्मभिः संसारोन्नतिं कर्त्तुं पारयन्ति परं सा आयुर्वृद्धिरीश्वराराधनजनितान्तःकरणशुद्धित्वे सात्विक भोजनेन ब्रह्मचर्यनिष्ठतया सदा ईश्वरभयेन सत्कर्म्मस्वेव प्रवृत्या पश्चात्तापादि दुःखराहित्येन भोजनाच्छादनादि चिन्ताविरहेण योगाभ्यासेन सत्वोद्रेकेण च जायते तपस्विनां योगिनामेव लक्षवर्षावधि जीवनमितिहासेषु पठामः नेश्वराराधनविमुखानां केषां मपि।

ईश्वरभक्तिर्नीतिर्वा संसारोन्नत्यर्थमावश्यका यतोऽनयैव परमभावमया विशालात्मान उदारचरिता महापुरुषाःजनाऽऽदर्शाय जायन्ते रामयुधिष्ठिरादयो युसीमुहम्मदप्रमुखाः संसर्गजा हि दोषगुणा भवन्ति ईश्वर एव च परमोन्नतियुतः परमगुणमयः परमानन्दः रूपः मालत्या पुष्पेणैव सौरभ्यमाप्यते न सिकतारेणुभिः ॥

## पातिव्रत्यप्रचण्डाः वीरप्रसवाः स्त्रियः ।

गृहस्थे सुखं तदा भवति यदा स्त्री पतिव्रता स्यात् गृहस्थिकृते अयमानन्दः सर्वानन्देभ्योऽतिरिच्यते वीरपुरुषानन्तरा संसारोन्नतिः कथं स्यात् तदुत्पत्तिश्च पातिव्रत्यप्रचण्डासु स्त्रीषु सतीषु जायते पातिव्रत्यञ्च स्त्रीणामीश्वराराधनेन ज्ञानप्राप्त्येश भयेन वा स्वपरमधर्म्मपातिव्रत्यपालनबुद्ध्या तन्महत्वज्ञानेन वा जाता हि भुवने गिरिजालक्ष्मीसीताद्या ईश्वरभत्या एव पातिव्रत्यदृढा देव्यः ।

## वाणिज्यादिव्यवहारे सत्यम् ।

एकस्य पार्श्वे धनमस्ति अन्यस्य च पार्श्वे धान्यमिति वाणिज्यमन्तरा एको द्वितीयस्य सुखं नाश्नुते यद्वा काले देशान्तरस्य द्रव्यं नावाप्यते इति वाणिज्यमपि संसारोन्नत्यर्थमावश्यकं परमेतत्संसारानर्थाय परमदुःखाय वा जायते यावदस्मिन् सत्येन व्यवहारो न स्यात् सत्यपालनबुद्धिश्च सत्यस्य ईश्वरकृपया तदाराधनेन वा जायते ।

विज्ञानज्ञानम् धूम्रशकटी तारकृषिविद्या आयुर्विद्यादयः संसारोन्नतिपरमावश्यकाः विज्ञानज्ञानस्य पदार्थविद्याया एव वा प्रभावः ज्ञानं विद्या वा ईश्वराराधनेन ज्ञानप्राप्त्याधारा इति पूर्वं प्रतिपादितम् । एवमेव निरुपद्रवत्वे राजनीत्या त्रिविधबलयुतवीरपुरुषेषु अहिंसायां सत्वोद्रेके परस्परप्रेम्णि वा ईश्वराराधनमेव कारणम् यतस्तेनैव जीवा निर्मला ज्ञानवन्तः धार्मिका वीरा स्वकर्मज्ञा आत्मवत्सर्वभूतावलोकितारः सत्वोद्रेकयुताश्च भवन्ति इति संसारोन्नत्यै ईश्वरप्रार्थनाया महत्त्वं प्रकाश्यान्ते तमेवेश्वरं भजामः विना तस्याश्रयेण को जीवः परमवैभवयुतस्य ईश्वराराधनस्य महत्वं प्रकटयितुं समर्थः स्यात् ।

ईश्वरप्रार्थनाधिकारी निर्विण्णो द्रुतचित्तश्च ईश्वरप्रार्थनासमये मनुष्येण सांसारिकपदार्थेषु निर्वेदमापाद्य द्रुतचेतसा कृतमीश्वराराधनं अग्नितप्ते जतुद्रव्ये (लाक्षाख्ये) यथारक्तादिरागः यावज्जतुद्रव्यं न नश्यति एवमेव द्रुतचेतसा कृतमीश्वराराधनं जनैरागइव मनुष्यान्तःकरणे खचितं यावज्जीवं न नश्यति । अथापि प्रार्थनासमये मनुष्येण आत्मन्यवरुद्धचेतसा भाव्यम् यथात्रिमुनिरस्य शिक्षां जग्राह एकस्मादिषुकाराद् येन स्वेषुनिबद्धदृष्टिना राजा दुन्दुभिढक्कापटहादिमहानिनादैर्गजाश्ववाहिनीयुतोऽपि पार्श्वेगच्छन् न दृष्टः पृष्टे चात्रिणा स प्राह प्रभो अहं स्वेषुकर्मैव जानाम्यधुना नान्यं पश्ये न जानामि न च शृणोमीति श्रुत्वा त्रिमुनिराह । "तद्वैचात्मन्यविरुद्धचेता न वेद किञ्चिद्बहिरन्तरं वा । यथेषुकारो नृपतिं व्रजन्तं ददर्श नो स्वेषुनिबद्धदृष्टिः । हरिः-ओ३म्-तत्सद्ब्रह्मणे नमः शान्तिः ॥

PRINTED BY B. D. MISRA AT THE BRAHMA PRESS ETAWAH.

* ओंनमःशिवाय *

# संस्कृत गायनावली ( प्रार्थना )

## गजल छन्दः ।

शिवः सेवासमापन्ने प्रभो सद्यस्त्वया कार्यः । अनाथो धर्मचिन्तार्त्तः कलौ दीनो न विस्मार्य्यः ॥१॥ गतं सत्यं नहि त्रेताऽधुना नो द्वापरः शम्भो । अनीशा यत्र भूदेवाः कलिः सद्यो भवो हार्य्यः॥२॥दयालुत्वात्त्वयाजीवः प्रवृद्धयै स्थूलतां नीतः। करोति ह्रासमद्यायं विभो धर्मे रतः कार्यः ॥ ३ ॥ अयं ज्ञानात्मिको देशो ह्ययं वाञ्छास्पदो यूनाम् । परंजीर्वास्त्वहोत्पन्नोऽज्ञतामूढ स्त्वयोद्धार्यः ॥ ४ ॥ द्विजानां धर्मरक्षार्थं विधात्रोत्पादितैवयानाम् । वयन्त्वन्ये वयंचान्ये श्रुतीशः कः कथं स्मार्यः ॥ ५ ॥ अयं पञ्चाब्युकेभेदः सनातिषवार्यदेवानाम् । विनाश्यो हिन्दुजातोयं सनाद्धर्मे रतः कार्य्यः ॥ ६ ॥ वपुर्न्नामिदं सर्वैः स्थितिं पञ्चात्मिकैर्योगे । वियोगे पञ्चतां धत्ते द्विजैर्भेदो न विस्तार्यः ॥ ७ ॥ युगेसत्यात्मिकेयेषां मतिर्धर्मे रता नित्यम् । द्विजानामेकता प्रद्य कलेः गर्वोघसंहार्यः ॥८॥ त्वयाश्रीरामकृष्णाख्यौ धृतेः रक्षावतारौद्वौ । धृतौकिं नोऽथ गीतायाम् सदा धर्म्मो मया धार्यः ॥९॥ यदीत्थं तथ्यमेवोक्तम् न जाने को विलम्बोऽसौ । धृतेः रक्षावतारेस्मिन् प्रभो सद्यस्त्वया धार्यः ॥१०॥ कथंकुर्याद्धृतेः रक्षां विपन्ना धर्मरक्षार्हाः । जनाः स्वीयानिराशोयं तवाधारो मया धार्यः ॥११॥ अयं ब्रह्माथविष्णुश्च प्रभो गौरी गणेशोऽयम् । स्तवैः स्तौतीशशम्भो त्वां कलौ धर्म्मो न विस्मार्यः ॥ १२ ॥ परं दीनं महादेव स्वकीये पादपीयूषे । चतुर्वर्गप्रदे मीनः सुखाढ्यं मे मनः कार्यः ( स्मार्यः ) ॥ १३ ॥

## सत्सङ्ग महिमा ।

यदि सत्सङ्गनिरतो भविष्यसि भविष्यसि ।
तथाऽसज्जनगोष्ठीषु पतिष्यसि पतिष्यसि ॥ १ ॥

निजप्राक्तनपापक्षयः धर्मवृद्धिश्च मनुष्यजीवनस्य मुख्योद्देशः स च उपदेशाधीनः उपदेशश्च सत्संगेनैव मिलति महात्मनां पुण्यफलं दर्शनमपि सत्संगे एव मिलति लोहश्चापि सुवर्णतां पार्श्वसंगेनैव याति प्राक्तनमहात्मानोऽपि सत्संगेनैव संसारार्णवं तीर्त्वा परमं पदं भेजिरे इत्यद्यसत्सङ्गस्यैव महिमानं वर्णयामः तत्रैको महात्मा एवं स्वानुभवं वर्णयति यत्स एकदा वनं गच्छन् दैववशात् पथ्येकस्मिन् विकटे गवाक्षस्थाने एकं शुकं साक्षाच्चकार स च शुकः तं महात्मानं दृष्ट्वैव स्वरक्षकान् कथयति यदस्यमहात्मनः कम्बलमपहार्यम् एष मात्रे गच्छतु अत्रैव निहन्तव्यः अस्य शरीराच्चर्म पृथक् कार्यं खनित्रेण, इत्यादि भयानकं तद्वचः श्रुत्वा समहात्मा यथाकथमपि शीघ्रप-

देशं अलित्वा ततोऽपगतः किञ्चिदग्रे गत्वा स एव महात्मा तस्यैव सहोदरं द्वितीयमेकं शुकं ददर्श स च शुकस्तं महात्मानं दृष्ट्वैव कथयति स्वागतमतिथिकाय ब्राह्मणे पाद्यार्घ्याचमनीयं स्वीकरोतु इदमासनमलङ्क्रियताम् इत्यादि तदनिहर्षमयमातिथ्यगुण युक्तं वचः श्रुत्वा स महात्मा मनसि पूर्वस्य चापरस्य च शुकस्य वचने द्यावापृथिव्योरिवान्तरं दृष्ट्वातिचकितस्तं शुकं तत्कारणं पप्रच्छाथ शुकः कथयति बद्धाञ्जलिः।

माता चैका पिताप्येको आवाञ्चवनपक्षिणौ। अहं मुनिभिरानीतः स चानीतो गवाशनैः॥२॥ मया श्रुतं चात्र वचो मुनीनां श्रुतञ्च तेनापि गवाशनानाम्। न तस्य दोषो न च मद्गुणो वा संसर्गजा दोषगुणा भवन्ति॥ ३ ॥

इति संसर्गेणैव गुणा आविष्कुर्वन्ति अथापि भोजराजः एकदा महाकविकालिदासाय समस्यापूर्तिं ददौ"पिपीलिका चुम्बति चन्द्रबिम्बम्,,तदुत्तरे कालिदासो निगदति। असज्जनः सज्जनसङ्गिसङ्गात् करोतिदुःसाध्यमपि सुसाध्यम्॥ पुष्पाश्रयाच्छम्भुशिरोऽधिरूढा पिपीलिका चुम्बति चन्द्रबिम्बम्॥ ४ ॥ अथापि मर्यादा पुरुषोत्तमश्री रामचन्द्रसमये गुरुत्वबहुलानां निमज्जनशीलानां प्रस्तराणां सेतुबन्धोऽपि रा, म, इत्यक्षरद्वयाङ्कितसत्सङ्गी प्रस्तराणामेव विभवः। तत्रैकः कविरेवं वर्णयति। ये मज्जन्ति निमज्जयन्ति च परान् ते प्रस्तरा दुस्तरे भो भो वीर! तरन्ति पश्य नितरां निस्तारयन्तेऽपि च। नैते ग्रावगुणा न वारिधिगुणा नो वा नराणां गुणाः श्रीमद्दाशरथेः प्रतापमहिमारम्भः समुज्जृम्भते॥ ५ ॥ अथापि–जाड्यं धियो हरति सिञ्चति वाचि सत्यम् मानोन्नतिं दिशति पापमपाकरोति। चेतः प्रसादयति दिक्षु तनोति कीर्तिम्। सत्सङ्गतिः कथय किं न करोति पुंसाम्॥ ६ अन्यच्च–यथोदयगिरेर्द्रव्यं सन्निकर्षेण दीप्यते। तथा सत्सन्निधानेन हीनवर्णोऽपि दीप्यते॥ ७॥ काचः काञ्चनसंसर्गाद्धत्ते मारकतीं द्युतिम्। तथा सत्सन्निधानेन हीनो याति प्रवीणताम्॥ ८ ॥ नीचः सज्जनसंसर्गात् सम्प्राप्नोति महत्पदम्। कीटोऽपि सुमनः सङ्गादारोहति सतां शिरः ॥ ६ ॥ अपि च संतप्तायसि संस्थितस्य पयसो नामापि न श्रूयते। मुक्ताकारतया तदेव नलिनीपत्रस्थितं राजते। स्वात्यां सागरशुक्तिमध्यपतितं सन्मौक्तिकं जायते। प्रायेणाधममध्यमोत्तमगुणः संवासतो जायते॥ १० ॥ किञ्च भृङ्गी समानीय तु कीटमेकम् सदा-स्वशब्दं कुरुतेऽस्य कर्णे। पश्चात्पकालेन स चापि कीटः भृङ्गी बभूवैषगुणोऽस्ति सङ्गे॥ ११ ॥ तयैव मात्रा जनकेन तेन जातौ च तस्यां जनितः स बालः। तत्रैव तत्त्वैरिहदेशभेदात्सङ्गेन चान्यां वदतीति धेहि॥१३॥ सिंहा वृकाश्च नागाश्च क्रूरभावं जहत्यमी। सङ्गेन ते रामतीर्थ! प्राञ्जलिस्त्वां नमाम्यहम्॥ १४ ॥ सुधांशुरोषधीशोऽपि पक्षे शुक्लेऽथ कृष्णके। यथा धत्तेऽर्कसंसर्गं तथा वृद्धिस्तथाक्षयः॥१५॥ वृकाः सिंहाः नागाः कठिनहृदया मांसरुचयः समाहर्तुं सज्जा अहह पथिकांस्तेऽपि झटिति॥ १६ ॥ इमान् पान्थान् सङ्गाद्रुचितविधिना स्वागतकराः। बुधाः सत्यं सङ्गोऽनुपमवि-

भव: कोपि जयति ॥ १७॥ ये वृक्षाकाष्ठकर्तुं मिशिछन्ना अग्निसात् कृताः । तेऽपि चन्द्-नसंसर्गाद्धृता मूर्ध्नि बुधैः सुरैः ॥ १८ ॥ जलं कूपस्य वाप्याश्च तडागसरसोरपि । गङ्गाजलसंसर्गाद् गङ्गाजलमयं भुवि ॥१९॥ घटी पिवति पानीयं झल्लरी तेन ताड्यते । अहो कुजनसंसर्गे वस्तव्यं नैव केनचित् ॥ २० ॥ साधारणो विशेषत्वं भजते सज्जना-श्रयात् । औषधिमिलितं वारि बहुमूल्येन लभ्यते ॥२१॥ सर्वे लोहाश्च पाषाणा मज्ज-न्त्यन्यानि यानि च । काष्ठसंसर्गातानि सर्वाण्यब्धिं तरन्ति हि ॥ २२ ॥ नृवाणीमण्ड-जौ ब्रूते पक्षिवाणीं मनूद्भवः । जन्मप्रभृति संसर्गात् सङ्गः सर्वातिरिच्यते ॥ २३ ॥ इति मूर्तिधरेशस्य साधूनां धर्मचारिणाम् । सङ्गोजनैः सदा कार्यः येनस्युस्तन्मया भुवि ॥ २४ ॥ ओंनमःशिवाय ।

# दान महिमा ।

उपनिषत्सु पश्यामो यदेकदा प्रकृतिमातुः सुता देवा दैत्या मनुष्याश्च उपदेश-ग्रहणाय प्रकृतिमातरमुपेयुस्तत्र प्रथमं देवा जग्मुः सा तान् आह द इति । ते द इ-त्यस्य दमध्वं स्वात्मेन्द्रियनिग्रहं कुर्वन्तु इत्यंगीकृत्य प्रत्यागता अथासुरास्तामुपेयुः सा तानपि प्राह द इति तेऽपि द इत्यस्य दयध्वं हिंसादिनाजीवान्मा दुःख-यन्तु इत्युपदेशमंगीकृत्य पुनरागताः अथमनुष्यास्तामीयुः सा तानपि उवाच द इति तेऽपि द इत्यस्य दानं कुर्वन्तु इत्यर्थमङ्गीकृत्य प्रतिनिवृत्ता इत्यद्य प्रकृतिमातुरे-वोपदेशमनुसृत्य मनुष्याणां कृते दानमहिमानं वर्णयामः । "कर्णाकर्णो वली राज्यं जीवं जीमूतवाहनः । ददौ दधीचिरस्थीनि नास्त्यदेयं महात्मनाम् ॥ १ ॥ संग्रहैकपरः प्राप्यः समुद्रोपि रसातलम् । दाता तु जलदः पश्य भुवनोपरि गर्जति ॥ २ ॥ कला-मिन्दुः करं दाता धारां धाराधरो यदि । सङ्कोचयिष्यते तर्हि जीविष्यति कथं जगत् । ३ ॥ पिवन्ति नद्यः स्वयमेव नोदकं धाराधरो वर्षति नात्महेतवे । खादन्ति वृक्षा न फलानि स्वयमेव परोपकाराय सतां विभूतयः ॥ ४ ॥ मूले भुजङ्गैः कुसुमानि भृङ्गैः शाखा प्लवङ्गै विटपे विहङ्गैः । आश्चर्यमेतत् खलु चन्दनस्य परोपकाराय सतां विभू-तयः । ग्रासादपितदर्धाध कस्मान्नो दीयतेऽर्थिषु । इच्छानुरूपो विभवः कदा कस्य भविष्यति ॥ ६ ॥ सत्पात्रं महती श्रद्धा देशकालं यथोचितम् । यद्दीयते विवेकज्ञै-स्त-द्दानं सात्विकं विदुः ॥ ६ ॥ गवे शुष्कतृणस्यापि दानं दुग्धाय कल्पते । सर्पे विषाय दुग्धस्य पात्रे दानं हि शोभनम् ॥ ७ ॥ दानं प्रियवाक्सहितं ज्ञानमगर्वं क्षमान्वितं शौर्यम् । वित्तं त्यागनियुक्तं दुर्लभमेतच्चतुष्टयं जगति ॥ ८ ॥ यद्ददासि विशिष्टेभ्यो यच्चाश्नासि दिने दिने । तत्ते वित्तमहं मन्ये शेषं कस्यापि रक्षसि ॥ ९ ॥ दानं भोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य । यो न ददाति न भुङ्क्ते तस्य तृतीयागतिर्भवति ॥ १० ॥ वातोल्लासितकल्लोल धिक्ते सागर गर्जनम् । यस्य तीरे तृषाक्रान्तः पान्थः पृच्छति वापिकाम् ॥११॥ तृषां भरायाः शमयत्यशेषां यः सोऽम्बुदोगर्जतिगर्जतूच्चैः ।

यस्यै वचस्यापि महन्ति तूर्णां सर्किंचुषा गर्जति निस्वनोऽविधः ॥ १२ ॥ तालाकपुरपि सेव्यो भवति न कृपणोमहानपिसमुद्रध्या । कूपोन्तःस्वादुजलः प्रीत्यैलोकस्य न समुद्रः ॥ १३ ॥ सुवर्णस्य मणीनाञ्चदाने यज्ञस्य यत्फलम् । तत्फलं लभते पुम्भिः शरणागत रक्षणे ॥ १४ ॥ ( अभयदान ) ॥ अन्नदानं महादानं विद्यादानं ततोधिकम् । अन्नेन क्षणिका प्रीतिर्यावज्जीवन्तु विद्यया ॥ १५ ॥ ( विद्यादान ) । धर्मार्थकाममोक्षांश्च यस्मादाप्नोतिदीक्षितः । इति सर्वप्रदानेभ्यो दीक्षादानं विशिष्यते ॥१६॥ ( दीक्षादान ) कतिपयदिवसैः क्षयं प्रयायात् कनकगिरिर्दिवसावसानकारी । इति सुदमुपयाति चक्रवाकी वितरणशालिनि रुद्रवर्मदेवे ॥ १७ ॥ पश्यन्त्यसंख्यपथगां त्वद्दानजलवाहिनीम् । देव-त्रिपथगात्मान गोपयत्यात्ममूर्धनि ॥ १८ ॥ तपः परं कृतयुगे त्रेतायां ज्ञानमुच्यते । द्वापरे यज्ञमेवाहुर्दानमेकं कलौ युगे ॥ १९ ॥

## धर्मः ।

धारणाद्धर्ममित्याहुर्धर्मो धारयते प्रजाः । इति धर्मं नमस्कृत्य तमेव तनुते नतः ॥ १ ॥ मृतोऽपि नीयते येन येनान्ते सुखमश्नुते । याति परं पदं येन सधर्मः परमा गतिः ॥ २ ॥ कर्म्मबन्धनसंसक्तान् जीवान्नुन्नतिवञ्चितान् । सूक्ष्मरूपधरान् कर्म विधातुं भोक्तुमक्षमान् ॥ ३ ॥ कर्तुं भोक्तुं क्षमं देहं ददातीशो दयातुरः ॥ नाभिपद्मसमुत्थेन तां स्तांस्तैस्तैस्तु ब्रह्मणा ॥ ४ ॥ यद् भुक्त्वा कुकर्माणि कृत्वा कृत्वा च सत्क्रियाः । शुभकर्ममया जाताः सुखं परममश्नुयुः ॥५॥ परमज्ञाः कदाचिन्नो हैते जीवा विमार्गगाः । अजानन्तः स्वकं धर्मं कुर्य्युरुन्नतिं नहि ॥ ६ ॥ दया मे क्रूरतां गच्छेदिति ब्रह्मा सनातनः । सृष्टेः प्रागेव तान् जीवान् प्राह वेदांश्चतुर्मुखः ॥ ७ ॥ यो सादिमयो धर्मो भगवान् यं सनातनः । सनातनाश्चर्ययोयं यं भगवान् मनुः स्वयम् ॥८॥ काले कालेऽवतीर्णास्ते प्रभुरूपाः सनातनाः । यमाहुर्धर्मं धीराः सञ्जीवानां परागतिः ॥ ९ ॥ सूत्रभूतस्य वेदस्य तत्त्वमज्ञान् प्रचक्षितुम् । पुराणैर्व्यासरूपेण येन्व्यासेन यः पुरा ॥ १० ॥ [illegible] बोध्यत्वमानीतः, सधर्मः ससनातनः । तत्रैव मन आधत्स्व तं सेवस्व क्षणे क्षणे ॥ ११ ॥ येनास्य पितरो याता येन याताः पितामहाः । तेन यायात् सतां मार्गमेवधर्मः सनातनः ॥ १२ ॥ ऋषयो मुनयश्चान्ये वसिष्ठात्रिपराशराः । स्मृतिषु वर्णयामासुर्यं धर्मं स सनातनः ॥ १३ ॥ लोकास्त्रिभुवनस्वामी सर्वे येनाश्नुयुः सुखम् । सधर्मस्तं विनेशं हि कोन्यो शक्नोति वर्णितुम् ॥१४॥

इति तेनैव स्रष्टा यो ब्रह्मरूपेण भासता ॥ सर्वज्ञेनश्रुतौ प्रोक्तः सधर्मोनुत्तमो नृणाम् ॥१५॥ तेनैव बहवो जाता अपवर्गसुखबुधाः । आराध्य मिलिताश्चान्ये हीश्वरं परमं प्रभुम् ॥ १६ ॥ भूताश्चापि परे धीरा नाम्नाकल्पान्तजीविनः । विद्वद्भिः पूजिताः केचिन्मूर्तिमाधाय मन्दिरे ॥ १७ ॥ अथापि धर्म्म एवायं मृतोजीवानुगः किल । शरीरञ्चापि नो याति मरणे परदुःखदे ॥१८॥ मृतं शरीरमुत्सृज्य लोष्ठकाष्ठसमं क्षितौ

विमुखा बान्धवा यान्ति धर्मस्तमनुगच्छति ॥ १९ ॥ एक एव सुहृद्धर्मो निधनेऽप्यनुयाति यः । शरीरेण समं नाशं सर्वमन्यत्तु गच्छति ॥ २० ॥ नामुत्र हि सहायार्थं पिता माता च तिष्ठतः । न पुत्रदारं न ज्ञातिर्धर्मस्तिष्ठति केवलम् ॥ २१ ॥ रावणस्य क्व सा लङ्का क्व च कंसस्य सा पुरी । रामकृष्णार्जितो धर्मः कल्पान्तेऽपि न नश्यति ॥ २२ ॥ भवोऽयं क्षणभङ्गोऽस्ति जीवनं तृणकाग्निवत् । यथार्थः सारिरूपश्च धर्मस्तमनिशं चर ॥ २३ ॥ वियोगस्तस्य येनास्ति तेन मैत्री न शोभना । धर्मेण न वियोगस्ते तेन मैत्रीं सदा कुरु ॥ २४ ॥ फलं पापस्य पुण्यस्य प्राप्यं दुःखं सुखं त्वया । दुःखेहा चेत्कुरु पापं धर्ममीहास्ति चेत्सुखे ॥ २५ ॥ जिज्ञासां कुरु धर्मस्य ज्ञातुं शक्तिर्न चेत्तव । धार्मिकान्नित्यमन्वेहि त्यज धर्मं कदापि मा ॥ २६ ॥ धर्म एव हतो हन्ति धर्मो रक्षति रक्षितः । तस्माद्धर्मः सदा पाल्यो नो मो धर्मो हतोऽवधीत् ॥ २७ ॥ धनानि भूमौ पशवश्च गोष्ठे नारी गृहद्वारि जनः श्मशाने । देहश्चितायां परलोकमार्गे कर्मानुगो गच्छति जीव एकः ॥ २८ ॥

## मृत्युः ।

श्वः कार्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम् । नहि प्रतीक्षते मृत्युः कृतमस्य न वा कृतम् ॥ १ ॥ गृहीत इव केशेषु मृत्युना धर्ममाचरेत् । इत्यन्वेति भयान्मृत्यो-र्येन जीवो धृतिश्चरेत् ॥ २ ॥ उद्घाटितनवद्वारे पञ्जरे विहगोऽनिलः । यत्तिष्ठति तदाश्चर्यं प्रयाणे विस्मयः कुतः ॥ ३ ॥ पितुः पितामहस्यापि मणिमन्त्रौषधिभृतः । पुत्रः पौत्रोऽपि म्रियते हा मृत्युर्हास्य क्रूरता ॥ ४ ॥ क्व स शम्भुः क्व च विष्णुः क्व रामः क्व गवां प्रियः । तेनेह वपुषा प्राप्ता का तर्हि गणना नृणाम् ॥ ५ ॥ प्रभाते कुरुते कर्म सायमाप्नोति पञ्चताम् । मृत्युपरवशः कायो धर्मं कुरु प्रतिक्षणम् ॥ ६ ॥ मन्त्रैः कल्याणमाधत्तेऽगदैर्निर्गदान् नरान् । सोऽपि मृत्युवशं प्राप्तो मृत्युर्बलयुतो महान् ॥ ७ ॥ नृपपूज्यो बुधैर्मान्यो हृषीकेशः सतां गुरुः । दीनानाथो यतो जातः सोऽपि पञ्चत्वमश्नुते ॥ ८ ॥ एकं क्षणमपि तेऽन्होऽवर्धते नहि कथमपि । सार्थकं कर्मधर्माभ्यां कुरुते न क्षणं क्षणम् ॥ ९ ॥ विदितान्तक्षणो यत्नाद्वैद्यमन्त्रैश्च रक्षितः । मणिरोहे सर्पदष्टो ययौ बाल्ये यमालयम् ॥ १० ॥ नरामोऽयमयोध्यायां कृष्णो वृन्दावने नहि । लवः लवपुरेनैव कुशः कुशपुरेऽध्वनौ ॥ ११ ॥ भरतो भारतेऽप्यन्तो लङ्कायामपि रावणः । हस्तिनायां न कौन्तेया मृत्युरेवात्र कारणम् ॥ १२ ॥ आम्रादीनां फलं यद्वज्जातमामं च पक्वकम् । कालेन भक्ष्यते नित्यं जीवान् मृत्युस्तथैव हि ॥ १३ ॥ क्षणान्तरेऽपि जीवामि प्रमाणं तेऽस्ति नो वद । मा चेत्कालमालस्येन धर्मे मोक्षस्य साधने ॥ १४ ॥ जनकाज्ञारतो रामः कृष्णो गो गोपिका प्रियः । श्रवणः पितृभक्त्याढ्यः कर्णो दानिशिरोमणिः ॥ १५ ॥ सत्यभक्तो हरिश्चन्द्रः धर्मनिष्ठो युधिष्ठिरः । ब्रह्मचारी मरुत्पुत्रः भीष्मो वचनपालकः

॥ १६ ॥ ब्रह्मज्ञानी वसिष्ठोऽयं सोऽर्जुनः शस्त्रधारकः । पातिव्रत्ये दृढाः देव्यः गिरिजाद्याश्च विदेहजाः ॥ १७ ॥ सरस्वती राधिकाद्या गान्धारी रुक्मिणी मुखा । सावित्री पद्मिनी प्रायाः ख्याताखिभुवनेऽखिलाः ॥१८॥ चिरञ्जीविभिः पूजिताः सर्वे सर्वाश्च जगदम्बिकाः । हा तेनेह नो देहेन का तर्हि गणना नृणाम् ॥ १९ ॥ अन्यो मन्त्रद्रष्टारो गीर्वाणाश्च प्रवर्त्तकाः । स्मृतिकारो मनुर्भगवान् वेदव्यासः पुराणकृत् ॥ २० ॥ आदिकविर्दण्डिमुख्या पाणिनिः शब्दशास्त्रकृत् । अन्येऽपि तद् गुणोपेता मान्या परम शक्रयः ॥ २१ ॥ मैत्रीभक्ति पदप्रदा लीला परम पूरुषः । सर्वे मृत्युवशं प्राप्ता अस्माकं गणनैव का ॥२२॥ क्रोडो करोति प्रथमं यदा जातमनित्यता । धात्रीव जननी पश्चात् तत्र शोकस्य कः क्रमः ॥ २३ ॥ क गता पृथिवीपालाःससैन्यबलवाहनाः । वियोगसाक्षिणी येषां भूमिरद्यापि तिष्ठति ॥ २४ ॥ कायः सन्निहितापायः सम्पदः पदमापदाम् । समागमाः सापगमाः सर्वमुत्पादि भङ्गुरम् ॥ २५ ॥ प्रतिक्षणमयं कायः क्षीयमाणो न लक्ष्यते । आमकुम्भइवाम्भस्थो विशीर्णः सन् विभाव्यते ॥२६॥ आसन्न तरतामेति मृत्युर्जन्तोर्दिने दिने । अघातं नीयमानस्य वध्यस्येव पदे पदे ॥ २७ ॥ अनित्यं यौवनं रूपं जीवितं द्रव्यसञ्चयः । ऐश्वर्य्यं प्रिय संवासो मुह्येत्तत्र न पण्डितः ॥२८॥ यथा काष्ठञ्च काष्ठञ्च समेयातां महोदधौ । समेत्य च व्यपेयातां तद्वद्भूत समागमः ॥ २९ ॥ यथा हि पथिकः कश्चि-च्छायामाश्रित्य तिष्ठति । विश्रम्य च पुनर्गच्छे-त्तद्वद्भूतसमागमः ॥ ३० ॥ पञ्चभिर्निर्मिते देहे पञ्चत्वञ्च पुनर्गते । स्वां स्वां योनिं मनुप्राप्ते तत्र का परिदेवना ॥ ३१ ॥ यावतः कुरुते जन्तुः सम्बन्धान् मनसः प्रियान् । तावन्तोऽपि निखन्यन्ते हृदये शोकशङ्कवः ॥ ३२ ॥ नायमत्यन्तसंवासो लभ्यते येन केनचित् । अपि स्वेन शरीरेण किमुतान्येन केन चत् ॥ ३३ ॥ अपि च । "संयोगोयं वियोगस्य संसूचयति सम्भवम् । अनतिक्रमणी यस्य जन्ममृत्योरिवागमम् ॥ ३४ ॥ आपातरमणीयानां संयोगानां प्रियैःसह । अपथ्यानामिवान्नानां परिणामोऽति दारुणः ॥ ३५ ॥ व्रजन्ति न निवर्त्तन्ते स्रोतांसि सरितां यथा । आयुरादाय मर्त्यानां तथा रात्र्यहनी सदा ॥ ३६ ॥ सुखास्वादपरो यस्तु संसारे सत्समागमः । सवियोगावसानत्वाद् दुःखानां धुरि जायते ॥ ३७ ॥ अतएव हि नेच्छन्ति साधवः सत्समागमम् । यद्वियोगासिलूनस्य मनसो नास्ति भेषजम् ॥ ३८ ॥ सुकृतान्येव कर्म्माणि राजभिः सागरादिभिः । अथ तान्येव कर्म्माणि तेऽपि प्रलयं गताः ॥३९॥ सञ्चिन्त्य सञ्चिन्त्य तमुग्रदण्डं मृत्युं नरस्यास्य विचक्षणस्य । वर्षाम्बुसिक्ता इव चर्म्मबन्धाः सर्वे प्रयत्ना शिथिली भवन्ति ॥४०॥ यामेव रात्रिं प्रथमामुपैति गर्भे निवासं नरजीव लोकः । ततः प्रभृत्यस्खलित प्रयाणः स प्रत्यहं मृत्यु समीपमेति ॥ ४१ ॥ जलान्तश्चन्द्रचपलं जीवनं खलु देहिनाम् । तथाविधमिति ज्ञात्वा शश्वत् कल्याणमाचरेत् ॥ ४२ ॥

इति प्रार्थयते—दीनानाथ शर्म्मा फिरोजपुर नगर

ॐ नमः शिवाय ।

# देवगुरु वा उसके अनुयायियोंके चैलेञ्जका जवाब

( जो गुरुजी के १९७३ के जन्मदिनोत्सव मुद्रित कर एक ट्रैक्टमें बांटा गया है )

वास्तव में मुझे ऐसे अज्ञानके चैलेञ्जका जवाब देते हुए अति लज्जा आती है और यही कारण है कि आज तक किसी आस्तिक ने इस का जवाब नहीं दिया, पर देव-गुरु वा उसके शिष्यों को इसका घमण्ड न रहे कि हमारे चैलेञ्ज का किसी ने जवाब नहीं दिया वा उनकी योग्यता वा विद्या का लोगों को पता लग जावे अतः देता हूँ।

परिपूर्ण सच्चिदानन्द को मानने वाले जिसे वह ईश्वर खुदा वा God के नामसे भी पुकारते हैं उसे पूजा वा अन्य सब प्रतिष्ठाओं का स्थान मानते हैं, वही Creator of the worlds omniscient omnipotant सृष्टि कर्तृत्व सर्वज्ञता सर्वशक्तिमत्तादि सब गुणों से भूषित है, देव गुरु जैसे भी जो ३२ वर्ष के करीब उस के नाम से द्रव्योपार्जन कर अब उसके नाम से ही इन्कार कर बैठे हैं, उसी के राज्यमें निज जीवन बसर करते हैं ऐसा होने पर भी इस भारत में ईश्वर सम्बन्ध में चैलेञ्ज देने वालों ने इतना भी न शोचा कि ऐसे चैलेञ्ज से मेरी योग्यता संसार में कैसे फैलेगी ऐसे चैलेञ्ज देने से विदित होता है कि देव गुरु को न्यायशास्त्र का लेशमात्र भी परिचय नहीं जो हमें बताता है कि पदार्थ वा वस्तु ज्ञान के लिये चार प्रमाण होते हैं प्रत्यक्ष, अनुमान, उपमान, वा शाब्द इनका पूर्ण परिचय न होनेके कारण दूसरे अनुमान प्रमाणका गलत उदाहरण दे अज्ञानी जनों के ईश्वरसे विमुख बनाने का नास्तिकने यत्न किया है वह कहता है कि परमात्मा सृष्टिकर्त्ता नहीं क्योंकि वह मेज पर धरे मृत्पिण्डका दो गोलिका नहीं बनाता, वह सर्वज्ञ नहीं क्योंकि वह पत्र पेन्सलके रखने पर हमारा वाञ्छित नहीं लिखता वह सर्वशक्तिमान् नहीं क्योंकि वह मेरी घटिका नहीं चलाता वाहरे अनुमान खण्ड के वेत्ता, बलिहारी है आपकी युक्ति वा विद्वत्ता पर इतने वैभव युक्त परमात्माके ऐसे अनुपम गुणोंका निषेध इस प्रकार निकृष्ट कामों के हुक्मन कहने से न करने पर किया जाता है भला आप इतना तो शोचें कि परमात्मा को क्या जरूरत है कि आप के ऐसे कथनों को सुने और करे यदि आपने अनुमान शास्त्रका यथावत् परिशीलन किया होता तो आप को इस प्रकार भारत में निज अज्ञान प्रकाश का अवसर न मिलता, अनुमान का ठीक उदाहरण तो यह है। "पर्वतो वन्हिमान् धूमवत्वात् यथामहानसम् ,, पहाड़ में आग है धूम वाला होने से जैसे रसोईखाना अब शतशः स्थान पाकालय आदि में जहां जहां धूम होता है वहां आग जरूर होती है ऐसे निश्चित कर कभी हम पर्वत के निकट जाते हैं तो धूम रेखा देख अनुमान करते हैं कि पहाड़ में आग जरूर है क्योंकि पाकालय आदि में हमने पूर्व शतशः देखा है कि जहां धूम होता है वहां आग जरूर होती है अब आप जरा अपने उदाहरण पर गौर करें यदि धूम में आग की तरह परमात्मा व अन्य परमात्मा जैसी शक्ति का हुक्मन ऐसे नाचीज कामोंका करना अटल वा निश्चित कर्त्तव्य वा नियम संसारमें दिखा परमात्मा

से ऐसा कहने पर न करने से कह सकते थे कि परमात्मा नहीं क्योंकि वह हमारे इन कामोंको नहीं करता पर जब हम संसार में देखते हैं कि एक मामूली सिपाही हुकमन कहने पर एक नाजीज कामों को जिस काम के उससे करानेमें हमारा कोई अधिकार नहीं करनेको तैयार नहीं तो, फिर परमात्मासे ऐसे कामोंको कहना वा ऐसी निर्मूल युक्तियों से उस की नास्ति बनाना बिना अज्ञानता के और कोई सार नहीं रखता। भला गुरु जी ! आप ही कहें कि एक हीनकोटि का मनुष्य एक निकृष्ट कामको करने के लिये आज्ञा करता जिस के करने के लिये आप तैयार नहीं तो क्या आप वा आप के शिष्य आप की सत्ता शक्ति का न होना स्वीकार करेंगे ? मैं अनुमान का एक और उदाहरण दे चैलेंज देने वालेका अज्ञान दूर करना चाहता हूं वा उससे इसका जवाब मांगता हूँ कि जब हम पूर्वसे पश्चिम और दक्षिणसे उत्तर तक संसारमें घट पट पाठशालादि सब सावयव परिणामी वा मध्यमावस्थापन्न पदार्थों का कर्त्ता अवश्य देखते हैं तो अनुमान करते हैं "इदं परिणामि जगदपि ईश्वरकर्तृकम् कार्यत्वात् घटादिवत्., इस उत्पत्ति विनाश शाली यावद् विश्व का कर्त्ता ईश्वर अवश्य है क्योंकि यह भी तो एक कार्य है और घटादि यावत् कार्य पदार्थों का कर्त्ता अवश्य संसार में देखाजाता है अतः या तो गुरु जी संसार में परिणामी मध्यमावस्थापन्न पदार्थों को जिन की रचना में भी वैचित्र्य पाया जावे बिना कर्त्ता के दिखावें वर्ना इस जगत् के कर्त्ता ईश्वर को मान उस की शरण पड़ें और भाइयों से मिल भारत का हित करें अन्त में हम गुरुजीसे अपने चैलेंज का जो ब्राह्मणसर्वस्व इटावा अक्टूबर सन् १९१२ में छपा है जवाब मांग प्रार्थना करते हैं कि यदि उन में कोई आत्मिक बल है तो मैदान में आवें और कोई बात निर्धारण करें जिससे दोनों के आत्मिक बलका निर्धारण किया जा सके और साफ जाहिर हो जावे कि आया परमात्मा को मानने वालोंमें आत्मिक बल अधिक है या उस के न मानने वालों में ॥

प्रश्न । गुरु जी लोकों की यह आम शिकायत है कि जब वह आप से ईश्वर मान वेदादि के आधार पर धर्मप्रचारार्थ प्रार्थना करते हैं तो आप वा आप के कर्मचारी उत्तर तक नहीं देते नाहीं बात करते हैं पर दान वा चन्दे आदिको आस्तिकोंके घर जा उन्हें शर्म दिलाते हो बहुधा ऐसा भी देखा गया है कि एक आस्तिक आस्तिक जान प्रार्थना करने पर आप के कर्मचारी की सन्दूकड़ी में पैसा वा अधिक डाल बैठता है पर पासके जन से पता लगने पर कि मैं नास्तिकको पैसा दे बैठा हूं रोता २ आप के कर्मचारी के पास आता है तो आप के कर्मचारी उससे बात तक नहीं करते आप ने भी आस्तिक दशा में आस्तिकों से प्राप्त द्रव्य के सम्बन्ध में ईश्वर छोड़ते समय कोई विचार नहीं किया क्या आप इस की असलियत वा सत्यता बता सकते हैं हम अपने सम्बन्ध में तो इतना कह सकते हैं कि नास्तिक से स्वयं दान मांगना तो एक तरफ रहा पर आग्रह से देने पर भी साफ २ प्रार्थना कर देते हैं कि जबलों आप परमात्माको नहीं मानते तबलों हम आपसे दान वा अन्नजल न लेने के लिये मजबूर हैं ॥

भवदीय— दीनानाथ शर्मा शास्त्री —— फिरोजपुरनगर

१-प्रश्न क्या देव गुरु जी में देव जीवन जन्म से है वा बाद में प्रादुर्भूत हुआ ? यदि बादमें तो कब किस संवत् मास दिन वा क्षण में, ? यदि जन्म से है तो क्या यह देवशक्ति का ही परिणाम था कि जो देव गुरु जी हनुमान् पूजा करते दुर्गापाठ सुनते और सनातनधर्मानुसार सन्ध्या करते और ब्रह्मसमाज में जा परमात्मा का अद्वितीय पुत्र बता लोगोंको ईश्वरभक्ति सिखाते थे यदि यह सब देवशक्तिका ही परिणाम था तो सदा वा यावज्जीवन क्यों न रहा यदि नहीं तो क्या देवशक्ति तब अन्धी होजाती थी वा स्थानान्तर में चली जाती थी यदि इस शक्ति का प्रादुर्भाव जन्म के बाद हुआ है तो क्या मांसाशन, मत्स्यतैल पान, वा अपने को बूट वा ताज धारण कर भी संन्यासी बताना, सन्तान होते हुए भी संन्यासोत्तर दो विवाह कराना, देवशक्ति का ही कार्य है ॥

२ आप सृष्टि सर्जन को किस प्रकार विना कारण मानते हो जैसे भी साइन्स के द्वारा कपोलकल्पित मानते हो उस पर भी आप यह कैसे कह सकते हैं कि देव गुरु जैसा न हुआ न होगा क्या गुरु जी ने जन्म लेते ही ऐवोलूशन वा साइन्स की तरक्कीको बन्द करदिया है यदि ऐसा है तो क्यों, और कैसे ? कृपया प्रमाण वा युक्तिसे समझाइये ।

३ भारत का इतिहास बताता है कि वही धर्म भारत में स्थायी वा हितकर है जो ईश्वर वा वेदादि शास्त्र का आधार रखता हो नास्तिकता सदा भारत के सत्यानाश का कारण हुई है तो क्या गुरू जी फिर ऐसा धर्म भारत में अपने नाम से फैला भारत वा संसार के हितकर रह सकते हैं ? कदापि नहीं ॥

दीनानाथ शर्म्मा [ शास्त्री ] फिरोजपुर ।

## सन्ध्याविधि ।

पूर्वाभिमुख हो ॐ केशवाय नमः स्वाहा । ॐ नारायणाय नमः स्वाहा । ॐ माधवाय नमः स्वाहा ॥ इससे आचमन करे ।

ॐ अपवित्रः पवित्रो वा सर्वाऽवस्थांगतोऽपि वा । यः स्मरेत्पुण्डरीकाक्षं सबाह्याभ्यन्तरः शुचिः ॥१॥ ॐ पुण्डरीकाक्षः पुनातु ॥ इससे कुश द्वारा देहमें जल छिड़के

ॐ भूर्भुवः स्वः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् ॥ यजुः—अ० ॥ ३६ ॥ मं० ३ । इस मन्त्रसे शिखा बांधे ।

ॐ अद्य पुण्यतिथौ उपात्तदुरितक्षयाय श्रीपरमेश्वरप्रीतये प्रातः सन्ध्योपासनमहं करिष्ये ॥ ऐसे देश कालादि कीर्तन कर संकल्प करे

वि०ॐ पृथ्वीति मन्त्रस्य मेरुपृष्ठऋषिः कूर्मो देवता सुतलं छन्दः आसने विनियोगः ।

ॐ पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता । त्वं च धारय मां देवि पवित्रं कुरु चासनम् ॥ पूर्व से धरणी माता को वन्दना करे

वि० ॐ अघमर्षणसूक्तस्याघमर्षणऋषिर्भाववृत्तो देवता अनुष्टुप्छन्दः । अश्वमेधावभृथे विनियोगः ॥

ॐ ऋतञ्च सत्यं चाभीद्धात्तपसोऽध्यजायत । ततो रात्र्यजायत ततः समुद्रोऽअर्णवः ॥ १ ॥ समुद्रादर्णवादधि संवत्सरोऽअजायत । अहो रात्राणि विदधद्विश्वस्य मिषतो वशी ॥ २ ॥ सूर्याचन्द्रमसौ धाता यथा पूर्वमकल्पयत् । दिवञ्च पृथिवीं चान्तरिक्षमथो स्वः ॥ ३ ॥ ऋ० १० । १९१ ॥ आचमन करे

ओं वाक् । ओं प्राणः । ओं चक्षुः २ । ओं श्रोत्रम् २ । ओं नाभिः । ओं हृदयम् । ओं कण्ठः । ओं शिरः । ओं बाहुभ्यां यशोबलम् । ओं करतलकरपृष्ठे । अङ्ग न्यास करे

ओं भूःपुनातु ( शिरसि ) ओंभुवःपुनातु ( नेत्रयोः ) ओंस्वःपुनातु (कण्ठ) ओंमहः पुनातु ( हृदये ) ओं जनः पुनातु ( नाभ्याम् ) ओं तपः पुनातु ( पादयोः ) ओं सत्यं पुनातु ( पुनःशिरसि ) ओं खंब्रह्म पुनातु ( सर्वत्र ) । उस उस अङ्ग का प्रोक्षण करे

वि० ओंकारस्य ब्रह्माऋषिर्दैवीगायत्रीछन्दोऽग्निर्देवता शुक्लोवर्णः सर्वकर्मारम्भे विनियोगः ॥१॥ ओं भूरादिसप्तव्याहृतीनां प्रजापतिर्ऋषिर्गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगत्यश्छन्दांस्यग्निवाय्वादित्यबृहस्पतिर्वरुणेन्द्रविश्वेदेवा देवता अनादिष्टप्रायश्चित्ते प्राणायामे विनियोगः ॥ २ ॥ ओं गायत्र्याविश्वामित्रऋषिः सविता देवता गायत्रीछन्द उपनयने प्राणायामे जपे विनियोगः ॥ ३ ॥ ॐ गायत्रीशिरसः प्रजापतिऋषिर्यजुश्छन्दोब्रह्माग्निर्वायुःसूर्योदेवता प्राणायामे विनियोगः ॥ ४ ॥

ॐ भूः ॐ भुवः ॐ स्वः ॐ महः ॐ जनः ॐ तपः ॐ सत्यम् ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो योनः प्रचोदयात् । ओं आपो ज्योतीरसोऽमृतं ब्रह्म भूर्भुवः स्वरोम् ॥ तीन ३ वार पढ़ विष्णु ब्रह्मा शिवके ध्यान से प्राणायाम करे

वि० ओं सूर्यश्चेत्यस्य ब्रह्माऋषिः प्रकृतिश्छन्दः सूर्योदेवता। अपामुपस्पर्शने विनियोगः

ॐ सूर्यश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः पापेभ्यो रक्षन्तां यद्रात्र्या पापमकार्षं मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना रात्रिस्तदवलुम्पतु यत्किञ्चिद्दुरितं मयि । इदमहममृतयोनौ सूर्ये ज्योतिषि जुहोमि स्वाहा ॥ प्रातः आचमन करे

वि० ओं आपः पुनन्त्विति मन्त्रस्य विष्णुऋषिरनुष्टुप्छन्दः आपो देवता । अपामुपस्पर्शने विनियोगः ॥

ओं आपः पुनन्तु पृथिवीं पृथ्वी पूता पुनातु माम् । पुनन्तु ब्रह्मणस्पतिर्ब्रह्मपूता पुनातु माम् ॥ यदुच्छिष्टमभोज्यं च यद्वा दुश्चरितं मम । सर्वं पुनन्तु मामापोऽसतां च प्रतिग्रहं स्वाहा ॥ मध्याह्न में आचमन करे

वि० ओं अग्निश्चमेति रुद्रऋषिः प्रकृतिश्छन्दोऽग्निर्देवता अपामुपस्पर्शने विनियोगः॥

ओं अग्निश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः पापेभ्यो रक्षन्तां यदह्ना पापमकार्षं मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना अहस्तदवलुम्पतु यत्किञ्चिद्दुरितं मयि इदमहममृतयोनौ सत्ये ज्योतिषि जुहोमि स्वाहा, सायं आचमन करे ॥

वि०—ओं आपो हिष्ठेत्यादित्र्यृचस्य सिन्धुद्वीपऋषिर्गायत्रीछन्दः आपोदेवता । मार्जने विनियोगः ॥

ओं आपोहिष्ठामयोभुवः, तानऊर्जे दधातन। महेरणाय चक्षसे ॥ १ ॥ यो वः शिवतमोरसः, तस्य भाजयते हनः। उशतीरिव मातरः ॥ २ ॥ तस्माअरङ्गमामवः, यस्य क्षयाय जिन्वथ, आपो जनयथाचनः ॥ ३ ॥ देह पर तथा भू पर मार्जन करे ।

वि० ओंद्रुपदादिवेति कोकिलो राजपुत्रऋषिरनुष्टुप्छन्दः आपोदेवता सौत्रामण्यवभृथे विनियोगः ॥

ओं द्रुपदादिव मुमुचानः स्विन्नः स्नातो मलादिव ॥ पूतं पवित्रेणवाज्यमापः शुन्धन्तु मैनसः ॥ यजु अ० २० । मं २० ॥ तीनवार पढ़ शिर पर जल डाले ।

वि० ओं अघमर्षणसूक्तस्याघमर्षणऋषिरनुष्टुप्छन्दः । भाववृत्तो देवता अश्वमेधावभृथे विनियोगः ॥

ओं ऋतञ्च सत्यञ्चाभीद्धात्तपसोऽध्यजायत ततोरात्र्यजायत ततः समुद्रोऽअर्णवः समुद्रादर्णवादधि संवत्सरोऽअजायत अहोरात्राणि विदधद्विश्वस्य मिषतो वशी ॥ सूर्याचन्द्रमसौ धाता यथा पूर्वमकल्पयत् । दिवञ्च पृथिवीं चान्तरिक्षमथोस्वः । ऋ० १० । १९१ । तीनवार पढ़ जल को नासाग्र से लगा निकला पाप जान वायें फेंके ॥

वि० ओं अन्तश्चरसीति तिरश्चीनऋषिरनुष्टुप्छन्दः । आपो देवता अपामुपस्पर्शने विनियोगः ॥

ओं अन्तश्चरसि भूतेषु गुहायां विश्वतोमुखः । त्वं यज्ञस्त्वं वषट्कार आपोज्योती रसोऽमृतम् ॥ ब्रह्मभूर्भुवः स्वरोम् ॥ आचमन करे ॥

वि० ओं उद्वयन्तमस-इत्यस्यप्रस्कण्वऋषिरनुष्टुप्छन्दः सूर्योदेवता सूर्योपस्थाने विनियोगः ॥१॥ ओं उदुत्यमित्यस्यप्रस्कण्वऋषिर्गायत्रीछन्दः सूर्योदेवता सूर्योपस्थाने विनियोगः ॥ २ ॥ ओं चित्रमित्यस्य कौत्सऋषिस्त्रिष्टुप्छन्दः सूर्योदेवता सूर्योपस्थाने विनियोगः ॥ ३ ॥ ओं तच्चक्षुरित्यस्य दध्यङ्ङाथर्वणऋषिर्ब्राह्मी त्रिष्टुप्छन्दःसूर्योदेवता सूर्योपस्थाने विनियोगः ॥ ४ ॥

ॐ उद्वयन्तमसस्परिस्वः पश्यन्त उत्तरम् । देवं देवत्रा सूर्यमगन्मज्योतिरुत्तमम् । ॥ १ ॥ यजुः २० ॥ २१ ॥ ॐ उदुत्यंजातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यम् । २ ॥ यजुः ॥ अ० ७ ॥ ४१ ॥ ॐ चित्रं देवानामुदगादनीकञ्चक्षुर्मित्रस्य वरुणस्याग्नेः । आप्राद्यावा पृथिवी अन्तरिक्षꣳ सूर्यआत्मा जगतस्तस्थुषश्च ॥ ३ ॥ य० ७ ॥ ४२ ॥ ॐ तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् । पश्येम शरदः शतं जीवेम शरदः शतꣳ शृणुयाम शरदः शत प्रब्रवाम शरदःशतमदीनाः स्याम शरदः शतं भूयश्च शरदः शतात् ॥ ४ ॥ यजुः ३६ ॥ २४ प्रातः सन्ध्या मिले हाथ फैला सूर्योपस्थान करे मध्यान्ह में ऊपर को ।

ॐ हृदयाय नमः ॥ १ ॥ ॐ भूः शिरसे स्वाहा २॥ ॐ भुवः शिखायै वषट्॥३॥ ॐ स्वः कवचायहुम् ॥ ४ ॥ ॐ भूर्भुवः नेत्रत्रयाय वौषट् ॥ ५ ॥ ॐ भूर्भुवः स्वः अस्त्राय फट् ॥ ६ ॥ अंगन्यास करे ।

वि० ॐ तेजोऽसीति देवाऋषयः शुक्रं दैवतं गायत्रीछन्दो गायत्र्यावाहने विनियोगः।

ॐ तेजोऽसि शुक्रमस्यमृतमसि धाम नामासि प्रियं देवानामनाधृष्टं देवयजनमसि

ॐ गायत्र्यस्येकपदी द्विपदी त्रिपदी चतुष्पद्यपदसि नहि पद्यसे नमस्ते तुरीयाय दर्शताय पदाय परोरजसे सावदोमाप्रापत्। बद्धाञ्जलि गायत्री का आवाहन करे।

वि० ॐकारस्य ब्रह्माऋषिर्गायत्रीच्छन्दोऽग्निर्देवता शुक्लोवर्णः जपे विनियोगः ॥१॥ ॐ त्रिव्याहृतीनां प्रजापतिर्ऋषिर्गायत्र्युष्णिगनुष्टुप्छन्दांसि। अग्निवायुसूर्यादेवता जपे विनियोगः ॥ २ ॥ ॐ गायत्र्याविश्वामित्रऋषिर्गायत्रीच्छन्दः सविता देवता जपे विनियोगः ॥ ३ ॥ फिर एकाग्र हो यथाशक्ति गायत्री जप करे।

ॐ देवागातुविदोगातुं वित्त्वागातुमित मनसस्पतइमं देवयज्ञं स्वाहा वातेधाः य० अ० २ ॥ २१ ॥ गायत्री का विसर्जन करे।

ॐ उत्तमे शिखरे जाते भूम्यां पर्वतमूर्द्धनि। ब्राह्मणेभ्योऽभ्यनुज्ञाता गच्छ देवि यथासुखम् ॥ विसर्जनार्थ प्रणाम करे ॥

वि० = विनियोग में जल ले मन्त्र पढ़ छोड़ना चाहिये ॥

## अथ तर्पण विधिः।

पूर्वाभिमुखो भूत्वा सव्येनाचम्य एवंगुणविशिष्टायां पुण्यतिथौ देवर्षिपितृतर्पणमहं करिष्ये। ॐ ब्रह्मादयो देवा आगच्छन्तु गृह्णन्त्वेताञ्जलाञ्जलीन् ॥ ब्रह्मा तृप्यताम् विष्णुस्तृप्यताम् रुद्रस्तृप्यताम् प्रजापतयस्तृप्यन्ताम् देवास्तृप्यन्ताम् छन्दांसि तृप्यन्ताम् ऋषयस्तृप्यन्ताम् वेदास्तृप्यन्ताम् पुराणाचार्य्यास्तृप्यन्ताम् गन्धर्वास्तृप्यन्ताम् इतराचार्य्यास्तृप्यन्ताम् संवत्सरास्सावयवास्तृप्यन्ताम् देव्यस्तृप्यन्ताम् अप्सरसस्तृप्यन्ताम् देवानुगास्तृप्यन्ताम् नागास्तृप्यन्ताम् सागरास्तृप्यन्ताम् पर्वतास्तृप्यन्ताम् सरितस्तृप्यन्ताम् मनुष्यास्तृप्यन्ताम् यक्षास्तृप्यन्ताम् रक्षांसि तृप्यन्ताम् पिशाचास्तृप्यन्ताम् सुपर्णास्तृप्यन्ताम् भूतानि तृप्यन्ताम् पशवस्तृप्यन्ताम् वनस्पतयस्तृप्यन्ताम् ओषधयस्तृप्यन्ताम् भूतग्रामाश्चतुर्विधास्तृप्यन्ताम् इति यवोदकेनैकैकमञ्जलिं देवतीर्थेन दद्यात् ॥ ततः मरीचिस्तृप्यताम् अत्रिस्तृप्यताम् अङ्गिरास्तृप्यताम् पुलस्त्यस्तृप्यताम् पुलहस्तृप्यताम् क्रतुस्तृप्यताम् प्रचेतास्तृप्यताम् वसिष्ठस्तृप्यताम् भृगुस्तृप्यताम् नारदस्तृप्यताम् ॥ देववत् ॥ तत उत्तराभिमुखो निवीती प्राजापत्येन तीर्थेनाञ्जलिद्वयेन तर्प्पयेत् ॥ सनकादयस्सनमनुष्या आगच्छन्तु गृह्णन्त्वेताञ्जलाञ्जलीन् सनकस्तृप्यताम् २ सनन्दनस्तृप्यताम् २ सनातनस्तृप्यताम् २ कपिलस्तृप्यताम् २ आसुरिस्तृप्यताम् २ वोढुस्तृप्यताम् २ पञ्चशिखस्तृप्यताम् ॥ ततोऽपसव्यम् ॥ तिलमिश्रितं जलं गृहीत्वा दक्षिणाभिमुखः पातितवामजानुर्जलाञ्जलित्रयेण पितृतीर्थेन तर्प्पयेत् कव्यवाडनलादयो दिव्यपितर आगच्छन्तु गृह्णन्त्वेताञ्जलाञ्जलीन् ॥ कव्यवाडनलस्तृप्यतामिदं जलं तस्मै स्वधा ३ सोमस्तृप्यतामिदं जलं तस्मै स्वधा ३ यमस्तृप्यतामिदं जलं तस्मै स्वधा ३ अर्यमातृप्यतामिदं जलं तस्मै स्वधा ३ अग्निष्वात्तास्तृप्यन्तामि-

दं जलं तेभ्यः स्वधा ३ सोमपास्तृप्यन्तामिदं जलं तेभ्यः स्वधा ३ बर्हिषदस्तृप्यन्तामिदं जलं तेभ्यः स्वधा ३ ततो यमादिचतुर्दशमूर्तय आगच्छन्तु गृह्णन्त्वेतांजलांजलीन् ॥ यमायनमः ३ धर्म्मराजाय नमः ३ मृत्यवेनमः ३ अन्तकाय नमः ३ वैवस्वतायनमः ३ कालायनमः ३ सर्वभूतक्षयायनमः ३ औदुम्बरायनमः ३ दध्नायनमः ३ नीलायनमः ३ परमेष्ठिनेनमः ३ वृकोदरायनमः ३ चित्रायनमः ३ चित्रगुप्तायनमः ३ इहागच्छन्तुमेपितर इदंगृह्णन्तुमेजलम् ॥ अमुकगोत्रः अस्मत्पिताऽमुकनामा वसुस्वरूपस्तृप्यतामिदंजलं तस्मै स्वधा ३ अमुकगोत्रोऽस्मत्पितामहोऽमुकनामा रुद्रस्वरूपस्तृप्यतामिदंजलं तस्मै स्वधा ३ अमुकगोत्रः अस्मत्प्रपितामहोऽमुकनामा आदित्यस्वरूपस्तृप्यतामिदं जलं तस्मै स्वधा ३ अमुकगोत्रा अस्मन्माताऽमुकीदेवीतृप्यतामिदं जलं तस्यै स्वधा ३ अमुकगोत्राअस्मत्पितामही अमुकीदेवीतृप्यतामिदंजलं तस्यैस्वधा ३ अमुकगोत्राअस्मत्प्रपितामही अमुकीदेवी तृप्यतामिदंजलं तस्यै स्वधा ३ अमुकगोत्रोऽस्मन्मातामहोऽमुकनामा वसुस्वरूपस्तृप्यतामिदंजलं तस्मै स्वधा ३ अमुक गोत्रोऽस्मत्प्रमातामहोमुकनामा रुद्रस्वरूपस्तृप्यतामिदं जलं तस्मै स्वधा ३ अमुक गोत्रोऽस्मद् वृद्धप्रमातामहोऽमुक नामा आदित्यस्वरूपस्तृप्यतामिद,जलन्तस्मै स्वधा ३ अमुक गोत्रा अस्मन्मातामही अमुका देवी तृप्यतामिदं जलं तस्यै स्वधा ३ अमुकगोत्रा अस्मत्प्रमातामही अमुकी देवी तृप्यतामिदं जलं तस्यै स्वधा ३ अमुक गोत्रा अस्मद् वृद्धप्रमातामही अमुकी देवी तृप्यतामिदं जलन्तस्यै स्वधा ३ ततआचार्यादीन्नामगोत्राकारैस्तर्प्पयेत् ॥ ततः ये बान्धवाबान्धवा यायेऽन्यजन्मनि बान्धवाः॥ ते सर्व्वे तृप्तिमायान्तु येऽस्मत्तोयाभिकाङ्क्षिणः ॥ १ ॥ येमेकुलेलुप्तपिण्डाः पुत्रदारविवर्जिताः तृप्यन्तुपितरः सर्व्वे मातृमातामहादयः ॥२॥ अतीतकुलकोटीनां सप्तद्वीपनिवासिनाम् ॥ आब्रह्मभुवनांल्लोकानिदमस्तुतिलोदकम् ॥३॥ इति मन्त्रैः पृथक्सतिलमुदकंदद्यात् ततःयेचास्माकंकुलेजाता अपुत्रागोत्रिणोमृताः ॥ तेगिवन्तुमया दत्तं वस्त्रनिष्पीडनोदकम् ॥ ४ ॥ इति वस्त्रं निष्पीड्यसव्येनाचम्य सूर्यायात्रिरर्घ्यं दद्यात् ॥ एहिसूर्य्यसहस्रांशोते जोराशेजगत्पते॥ अनुकम्पय मां भक्त्या गृहाणार्घ्यं नमोऽस्तुते ॥५॥ ब्रह्मा मुरारिस्त्रिपुरान्तकारीभानुः शशी भूमिसुतोबुधश्च ॥ गुरुश्च शुक्रश्शनिराहुकेतवस्सर्व्वेग्रहाश्शांतिकराभवन्तु ॥६॥ इति देवर्षिपितृतर्पणं समाप्तम् ॥

श्रीगणेशाय नमः ॥ अथ गोग्रासः प्रारभ्यते ॥ सुरभिर्माता सुरभिः पिता सुरभिः पितृतारिणी ॥ गोग्रासश्चमया दत्तःसुरभे प्रतिगृह्यताम् ॥१॥ हन्तकारः ॥ हन्तकारो मया दत्तः पितृनुद्दिश्य हेतवे ॥ गृहाण त्वं कृपां कृत्वा क्षेमायुष्यंकुरुष्वमे ॥१॥ अथातिथि पूजनम् ॥ अतिथेर्दर्शनं पुण्यं विष्णुमूर्तिर्विराजते॥ पितृनुद्दिश्य दीयेतपितृदेवे यथार्पणम् ॥ १ ॥ अपसव्यम् ॥ यमोसि यमदूतोसि वायसोसिमहाबल ॥ अहोरात्र कृतंपापं बलिं भक्षन्तु वायसाः ॥ श्वानबलिः ॥ श्वानमार्ज्जारकीटादिबलिभक्षेभ्यो नमः ...यताम् ॥ ममक्षेमाय आरोग्यं रक्षरक्षकुलं मम ॥ १ ॥ समाप्तम् ॥

अथ वैश्वदेवकर्मविधिः ॥ प्रथम चक्र बनावै जिसका द्वार पूर्वमें राखे ऐसा चार कूट वालो चक्र करे उस चक्र के पूर्वादि दिशा ईशान्यादि विदिशा कल्पना करे प्रथम ईशान दिशामें कांस्यपात्र राखे उसमें जल पावे जलमें ॐ ब्रह्मणे स्वाहा ॐ प्रजापतये स्वाहा ॐ गृह्याभ्यः स्वाहा ॐ कश्यपाय स्वाहा ॐ अनुमतये स्वाहा ॥ इन मन्त्रों से पांच आहुति करे फिर इस ईशान दिशामें ही ॐ पर्जन्याय नमः । ॐ अद्भ्यो नमः । ॐ पृथिव्यै नमः । इन मन्त्रोंसे तीन जगह जुदा जुदा अन्न धरे फिर चक्र के द्वार में एक पासे ॐ धात्रे नमः दूसरे पासे ॐ विधात्रे नमः अन्न धरे फिर इस प्रकार ही ॐ वायवे नमः पूर्वविषे ॐ वायवे नमः दक्षिणविषे ॐ वायवे नमः पश्चिमविषे ॐ वायवे नमः उत्तरविषे फिर ॐ प्राच्यै नमः पूर्वविषे ॐ अवाच्यै नमः दक्षिणविषे ॐ प्रतीच्यै नमः पश्चिमविषे ॐ उदीच्यै ननः उत्तरविषे फिर ॐ ब्रह्मणे नमः ॐ अन्तरिक्षाय नमः ॐ सूर्याय नमः इन मन्त्रों से चक्र के मध्यविषे जुदा जुदा तीन जगह अन्न धरे । फिर ॐ विश्वेभ्यो देवेभ्यो नमः ॐ विश्वेभ्यो भूतेभ्यो नमः ॐ उषसे नमः ॐ भूतानां पतये नमः इन मंत्रों से दक्षिणविषे चार जगह अन्न धरे फिर यज्ञोपवीत अपसव्य करे दक्षिणाभिमुख वामजानु नवाय कर पितृतीर्थ से ॐ पितृभ्यः स्वधा नमः दक्षिणविषे अन्न धरे । फिर बलिशेषान्नलिप्तपात्रकूं जल से धोकर ॐ यक्ष्मैतत्ते निर्णेजन नमः इस मन्त्र से वायव्य दिशा में डारे सव्य यज्ञोपवीत से फिर चक्र से बाहर वायव्य दिशासे ईशान की तरफ अन्नबलि धरे इन मन्त्रों से ॐ देवेभ्यो नमः ॐ मनुष्येभ्यो नमः ॐ पिपीलिकादिभ्यो नमः ॐ श्वभ्यो नमः ॐ श्वपचेभ्यो नमः ॐ पापरोगिभ्यो नमः ॐ कृमिभ्यो नमः ॐ पक्षिभ्यो नमः ॐ वायसेभ्यो नमः ॐ गोभ्यो नमः ॐ सनकादिभ्यो नमः ॐ पशुभ्यो नमः ॐ सिद्धिभ्यो नमः ॐ यक्षेभ्यो नमः ॐ नागेभ्यो नमः ॐ दैत्येभ्यो नमः ॐ प्रेतेभ्यो नमः ॐ पिशाचेभ्यो नमः ॐ तरुभ्यो नमः ॐ सर्वेभ्यो भूतेभ्यो नमः ॐ चतुर्दशभूतगणेभ्यो नमः इति बलिवैश्वदेवकर्मप्रहुतनामयज्ञविधिः ॥ ४ ॥ प्रथम इस मन्त्र से अग्नि का आवाहन करे. ॐ ऊर्ध्व पादो भवेद्यस्य दृष्टिः पातालगोचरा । सन्मुखे तिष्ठते देव आहुतिः दीयते मया ॥ ॥ ऐसे अग्नि में जल सेचन करे फिर ॐ ब्रह्मणे स्वाहा इदं ब्रह्मणे ॐ प्रजापतये स्वाहा इदं प्रजापतये ॐ गृह्याभ्यः स्वाहा इदं गृह्याभ्यः ॐ कश्यपाय स्वाहा इदं कश्यपाय ॐ अनुमतये स्वाहा इदमनुमतये इन मन्त्रों से अग्नि में पञ्चाहुति करे फिर अग्नि में जल सेचन करे हाथ जोड़ कर, ॐ गच्छ गच्छ सुरश्रेष्ठ स्वस्थानं परमेश्वर । यत्र ब्रह्मादयो देवास्तत्र गच्छ हुताशन ॥ १ ॥
इस मन्त्रसे विसर्जन करे फिर एकान्त बैठकर भोजन करे, इति हुतदर्श पञ्चमं समाप्तम्

## चर्पटपञ्जरी ।

भज गोविन्दं भज गोविन्दं गोविन्दं भज मूढमते । प्राप्ते सन्निहिते मरणे नहि नहि रक्षति डुकृञ् करणे ॥ बालस्तावत् क्रीडासक्तः तरुणस्तावत् तरुणीरक्तः । वृद्धस्तावत्

चिन्तामग्नः पारे ब्रह्मणिकोऽपि न लग्नः॥ भज गोविन्दम्० ॥१॥ अङ्गं गलितं पलितं मुंडं दशनविहीनं जातं तुण्डम् वृद्धो याति गृहीत्वा दंडं तदपि न मुंचत्याशापिण्डं ॥ भज गोविन्दम्०॥२॥दिनमपि रजनी साय प्रातः शिशिर वसन्तौ पुनरायातः। कालः क्रीडति गच्छत्यायुः तदपि न मुंचत्याशावायुः ॥ भज गोविन्दम्० ॥ ३ ॥ नारीस्तनभरजघन, निवेशं दृष्ट्वा मायामोहावेशम्।एतन्मान्सवमादिविकार मनसि विचारय वारम्वारं । भज गोविन्दम्० ॥४॥ अग्रे वह्निः पृष्ठे भानुःरात्रौ चिबुकसमर्पितजानुः करतलभिक्षा तरुतलवासः तदपि न मुंचति आशापाशः॥ भज गोविन्दम्० ॥ ५ ॥ रथ्याकर्पटविरचित' कन्था पुण्यापुण्यविवर्जितपंथा । नाहं न त्वं नायं लोकः तदपि किमर्थं क्रियते शोकः ॥ भज गोविन्दम्० ॥६॥ वयसि गते कःकामविकारः शुष्के नीरे कः कासारः । क्षीणेवित्ते कःपरिवारःतत्त्वज्ञानेकःसंसारः ॥ भज गोविन्दम्० ॥ ७ ॥ यावत् वित्तोपार्जनसक्तः तावन्निजपरिवारे रक्तः । पश्चाद्धावति जजरदेहे वार्त्तां कोपि न पृच्छति गेहे ॥ भज गोविन्दम्० ॥ ८ ॥ जटिलो मुण्डितलुंचितकेशःकाषायाम्बरबहुधृतवेशः पश्यन्नपि च न पश्यति लोकः उदरनिमित्त' बहुकृतशोकः ॥ भज गोविन्दम्० ॥ ९ ॥ गेयं गीता नामसहस्र'ध्येय श्रीपतिरूपमजस्र' । नेय सज्जननिकटे चित्तं देय दीनजनाय च वित्तम् ॥भज गोविन्दम् ॥ १० ॥ भगवद्गीता किंचिदधीता गगाजललवकणिकापीता येनाकारि मुरारेरर्चा तस्य यमोऽपि न कुरुते चर्चां ॥ भज गोविन्दम्० ॥ ११ ॥ पुनरपि जननं पुनरपि मरणं पुनरपि जननीजठरे शयनम् इह संसारे भवदुस्तारे कृपया पारे पाहि मुरारे ॥ भज गोविन्दम्० ॥ १२ ॥ कोऽहं कस्मात् कुत आयातः का मे जननी को मे तातः इति परिभावय सर्वमसारं सर्वं त्यक्त्वा स्वप्नविचारम् ॥ भज गोविन्दम्० ॥ १३ ॥ का ते कान्ता कस्ते पुत्रः संसारोऽयमतीव विचित्रः । कस्य त्वं कः कुत आयातः तत्त्वं चिन्तय यदिदंभ्रातः ॥ भज गोविन्दम्० ॥१४॥ सुरतटिनीतरुमूलनिवासः शय्या भूतलमजिनं वासः सर्वपरिग्रहभोगत्यागः कस्य सुखं न करोति विरागः ॥ भज गोविन्दम्० ॥ १५ ॥

# AN ANSWER TO DEVA GURU.

A reply to the challenge given by Dev Guru of Dev Samaj and his followers in 1912 the reference of which was made in a tract issued some two months ago by the said Dev Guru.

Really I am sorry to take up my pen in order to reply to the challenge against the existence of God, but I do so simply to explain to Dev Guru and his followers the absurdity of their reasoning, and in fact this is the cause that no body has up to this time accepted the challenge. Those who believe in the Almigty Who is known by the various names of Ishwar, Khuda, God, &c, &c consider Him the object of all devotion. He alone is the Creator of the world

and is at the same time Omniscient and Omnipotent, and is also possessed of such other; qualities which no mortal can ever claim to have. Dev Guru himself who now denies the existenc of Him was at first one of His believers. Before daring such a challange, Dev Guru should have thought for a while about the shallowness of his logical knowledge, and the impression that the challenge would make upon the public of his ignorance. The challenge shows that Dev Guru has absolutely no knowledge of the Nyaya Shastra which tells that there are only four ways in which we can come to prove the reality of a thing and those are. (1) Pratyaksh, (2) Anuman, ( logical inference ) ( 3 ) Upman. and ( 4 ) shabda. Dev Guru has tried to deceive the public by the mis-application of the second form of proof. He holds ( 1 ) that God is not the Creator of the World since He does not make two or three small balls out of a small quantity of moist earth placed by him on a table.

( 2 ) that He is not Omniscient since He dose not write down on the blank paper with the pencil which he [Deva Guru] places upon a table and mentally desires Him to write, and

(3) that His omnipotence has no validity in it since He does not wind DevaGuru's stopped watch. All this is fallacious reasoning. Logical reasoning may be rightly explained by this example that wherever we see the columns of smoke rising in the atmosphere there the exietenc of fire is quite certain, Here we have first actually seen the case holding true numerous. times, and after that we have come to the point or in other words made the generalisation that smoke is the sure ,sign of burning fire. Now how invalid the reasoning of Dev Guru is noone has ever seen even insignificant person carrying out all our orders what to say of God who possesses so great a power. If you ask even a constable who draws a salary of only 8/-or 9/-to obey your commands, does he do so.? Hence when we see that even persons of no great power do not obey our com mands, then how can God of so great a power be expected to obey our orders, and those even of such a low nature. Dev Guru himself if commanded by a menial to do some work which he can do, will not care to do it, and. will his followers then say that he has got no power to do that work ! Or if a man who ventures to ask the Almighty to obey his commands were to go to a Magistrate and order him that he should settle the case in his favour, otherwise

he would not think him a Magistrate, what treatment will be meted out to him? Certainly he will be driven out of the court by a chaprasi. Now the question is: could not the Judge decide the case in his favour? Yes, he could, but only if the man had brought a worthy suit and requested him ( not ordered him ) to consider over his case ( not do as he likes ). Thus we find that our deserts, the worthiness of our requesth and the manner of bringing them forward, these three things are quite essential in having our requests granted even by mortals.

Thus we find that Dev Guru's inference are quite wrong, when we do not find even any human being who possesses so insignit. ficant power, obeying our orders in this way, then how can we infer that God who is so Great, would care to obey the order of an atheist, who has done nothing to propitiat Him.

I now give a second example of logical inference to make Dev Guru see his absurdity in denying the existence of God, and ask him to answer it if he can.

In going from east to west and north to south and vice versa we find that all things which are mortal or changeable and show some skill in their structures, have some creator, and from this we logically infer that all this world which includes those three in it must have have some Creator behind it. and that is God. Either Dev Guru should show any thing mortal changeable and showing some skill in its structure, without a Creator in the world or should accept that God is the creator of all the Universe. In fine we refer him to our challenge given in "Brahman serwaswa Etawah" dated October 1912, and request him that if he has any power, he should come forvard and prove whether God believers or athiests have more spirtual power.

## SUPPLIMENT

1. Does Dev Guru possess 'Dev Jiwan' from his birth or was it after this that he came to have it? if the latter in what year, month, day and the moment? if the former then was it the result of Dev Shakti that he first worshipped sri Hanuman, did Durga Path, and recited Sandhya as a Sanatanist, & afterwards called himself the beloved son of God as a Brahmmo? If all this was the result of "Dev Jiwan", why did it not last the whole of his life?

If his doing these actions was not guided by 'Dev shakti' in his first years, then was it blind then or had gone on some other duties ? Even if this SHAKTI was got by him after his birth, then are meat-eating, using codliver-oil and calling himself Sanyasi by wearing boots and crowns, marrying two wives after this Sanyas, the behests of Dev Shakti.

2 What are your views about the world creation? And then how can you say that Dev Guru is and will be unique? Did Dev Guru stop evolution and progress of science from his birth ?

3. The history of India tells that that religion is permanent & beneficial to the people which have its faith in God, the Vedas, & the Shastras. Atheism has always been the cause of ruin. Then can Dev Guru be a benefactor of the world by introducing such a religion in his name?

DINA NATH SHASTRI
FEROZPORE CITY.

सकीर्णश्लोकाः—गङ्गाशीर्षे च भाले हिमकर शकल पाद्योस्ते हिमानी-देहे पश्यन्त्रिदोषांस्त्रिविधजड़मये जायमानोऽस्ति शम्भो ॥ कार्यं धार्यं हितन्ते मम च सुखकरं शीतसन्तापशान्त्यै-तप्तेतापैस्त्रिभिर्मे हृदि वस सतत सिद्धिरप्योभयोः स्यात् ॥१॥ अहल्यापाषाणं प्रकृतिपशुरासीत् कपिचमूः गुहोऽभूच्चाण्डालस्त्रितयमपिनीतं निजपदम् ॥ अहं चित्तेनाश्मपशुरपि तवार्चादिकरणात् । क्रियाभिश्चाण्डालो रघुवरममामुद्धरसिकिम् ॥ २ ॥ यथागवां सर्वशरीरज पयः पयोधरान्निस्सरतीहकेवलम् । तथापरात्माऽखिलगोऽपि शाश्वतः प्रकाशमाप्नोति सद्दिव्यदेशकैः ॥३॥ गवां सर्पिः शरीरस्थ न तत्पुष्टिकरं मतम् । तदेव कर्मरचितं पुनस्तस्यैव भेषजम् ॥ ४ ॥ आदौ राम तपोवनादि गमनं हत्वा मृगं काञ्चनम् । वैदेहीहरणं जटायुमरणं सुग्रीवसंभाषणम् ॥ बालेनिग्रहण समुद्रतरणं लङ्कापुरीदाहनम् । पश्चाद्रावणकुम्भकर्णमरणं एतद्धि रामायणम् ॥ ५ ॥ आदौदेवकि देवगर्भजननं गोपीगृहेवर्धनम् । मायापूतनजीवितापहरणं गोवर्धनोद्धारणम् ॥ कंसच्छेदनकौरवादिहननं कुन्तीसुतापालनम् । एतद् भागवतं पुराणकथितं श्रीकृष्णलीलामृतम् ॥ ६ ॥ आदौ पाण्डवधार्तराष्ट्रजननं लाक्षागृहेदाहनम् । द्यूतश्रीहरणं वने विचरणं मत्स्याश्रये वर्धनम् ॥ लीलागोग्रहणं रणे विचरणं सन्धिक्रियावर्धनम् । पश्चाद् भीष्मककौरवादिहननञ्चैतन्महाभारतम् ॥ ७ ॥ अष्टादशंपुराणेषु व्यासस्य वचनद्वयम् । परोपकारःपुण्याय पापाय परपीडनम् ॥ ८ ॥ असारे खलु संसारे सारं श्वसुरमन्दिरम् । हरो हिमालये शेते विष्णुः शेते महोदधौ ॥ ९ ॥ क्षीरेणात्मगतोदकाय हि गुणाः दत्ता पुराऽतेऽखिलाः । क्षीरेतापमवेक्ष्य तेन पयसा ह्यात्मा कृशानौ हुतः ॥ गन्तुं पावकमुन्मनस्तदभवत् दृष्ट्वा तु मित्रापदम् । युक्तस्तेन जलेन

शाम्यति मतां मैत्री पुनस्त्वीदृशी ॥ १० ॥ उदयति यदि भानुः पश्चिमे दिग्विभागे विकसति यदि पद्मं पर्वताग्रे शिलायाम् ॥ प्रचलति यदि मेरुः शीततां याति वन्हिर्न चलति खलु वाक्यं सज्जनानां कदाचित् ॥११॥ रत्नाकरः किं कुरुते स्वरत्नैः विन्ध्याचलः किं करिभिः करोति । श्रीखण्डखण्डैर्मलयाचलः कि परोपकाराय सतांविभूतयः ॥ महादेवसमाजस्य प्रथमो नियमः–धर्मज्ञानं पालनञ्च धर्मरक्षाहितं तथा ॥ ईश्वराराधने नाप्ता भक्तिशक्त्याद्योगुणाः ॥ १ ॥ एतैस्तत्र प्रवृद्धो यः सगुरुरत्रगीयते । तदग्रे गुरुपुत्रः स्याच्छिष्योऽस्यां त्रागुणान्वितः ॥ २ ॥

## फिरोजपुर गङ्गामन्दिर का सायंस्तव पाठ ।

कदाचिन्नागारिः सुरतटिनि तीरंपरिचरन्–समादायव्यालं सबलमगलत्कश्चिद्बलः ॥ चतुर्बाहुर्भूत्वा तदुपरि समारुह्यसहसा गतो वै वैकुण्ठं तवजननि ! तोयस्यमहिमा ॥ १ ॥ कृपापारावारां तपनतनयां तापशमनीं–मुरारेः प्रेयस्यां भवभयदवां कीर्तिवरदाम् ॥ वियज्जालान्मुक्तां वियदपिसुखाप्तेः ,परिकरम् सदाधीरोनित्यं भजति यमुनांनित्यवरदाम् ॥ २ ॥ शुक्लां ब्रह्मविचारसारपरमामाद्यां जगद्व्यापिनीं । वीणापुस्तक धारिणीमभयदां जाड्यान्धकारापहाम् ॥ हस्तेस्फाटिकमालिकांविदधतीं पद्मासने संस्थिताम् वन्देत्वांपरमेश्वरीं भगवतीं बुद्धिप्रदां शारदाम् ॥३॥ कस्तूरीतिलकं ललाटपटले वक्षः स्थलेकौस्तुभम्–नासाग्रेवरमौक्तिकंकरतलेवेणंकरेकङ्कणम् सर्वाङ्गे हरिचन्दनसुललितं कण्ठेचमुक्तावली गोपस्त्रीपरिवेष्टितो विजयतेगोपालचूडामणिः ॥ ४ ॥ वन्देदेवमुमापतिं सुरगुरुं वन्देपशूनांपतिं–वन्देपन्नगभूषणंमृगधरं वन्देजगत्कारणम् ॥ वन्देसूर्य्यशशाङ्कवन्हिनयनं वन्देमुकुन्दप्रिय–वन्देभक्तजनाश्रयञ्चवरदंवन्दे शिवंशङ्करम् ॥ ५ ॥ असितगिरिसमंस्यात्कज्जल सिन्धुपात्रे सुरतरुवरशाखालेखनीपत्रमुर्वी। लिखतियदिगृहीत्वा शारदासार्वकालं–तदपि तवगुणानामीश ! पारंनयाति॥६॥ अतुलितबलधामंस्वर्णशैलाभदेहं–दनुजवनकृशानुंज्ञानिनामग्रगण्यम् ॥ सकलगुणनिधानंवानराणामधीशं रघुपतिवरदूतं वातजातं नमामि ॥७॥ मनोजवं मारुत तुल्यवेग जितेन्द्रियं बुद्धिमतां वरिष्ठम् ॥ वातात्मजंवानरयूथमुख्यं श्रीरामदूतं शरणं प्रपद्ये ॥८॥ उल्लङ्घ्य सिन्धोः सलिलं सलील यः शोकवह्निं जनकात्मजायाः । आदायतैनेवददाह लङ्कांनमामितं प्राञ्जलिराञ्जनेयम् ॥ ६ ॥

इति प्रार्थयते—दीनानाथ शर्म्मा ( शास्त्री ) फिरोजपुर नगरे ।

## शङ्करस्तुतिपञ्चकम् ।

वेद-सप्त-नव-भूमि विक्रमे ज्येष्ठमासि सितभिन्न-नेत्रके ।

ताड़ितोहिरिपुभिस्विलोपजैर्दर्शितोऽभवमुमेशभिक्षुणा ॥

दीननाथ सुवरेणशार्त्तिया चार्थितोऽसिकमला-सुशान्तये ।
सर्वदुःख मपनीतमद्यमे सेवकत्वमभिलष्यते मया ॥ १ ॥

वृषोदेहःशुभ्रः कपिशमुपवीतश्च सरिता जटामालेतावच्छर्वचिति-शिवस्थान-भ. जगाः । द्वितीयस्त्वश्चन्द्रो द्रढयति "शिवः सत्वविभवः" द्यभाश्शम्भो! शक्ते स्त्वयिनु खलु पश्यामि विभवम् ॥ २ ॥ शरीरं, मााहिष्यः भुजग-करशूलेचडमरुः जटाश्वेताः कृष्णाः भूतमशुभमुखहश्च शिरसा स्वभूभङ्ग्याच्छन्नं शशि-शिव-दयालुत्वमपिच द्विधाशम्भो शक्ते स्त्वयिनु खलु पश्यामि विभवम् ॥ ३ ॥ सुकर्म्माकर्मस्थे विलसतिगवानन्ततनुभि रतस्त्वंमेस्वामिन् कुरुशिवयुतं कार्य्यनिचयम् । तथापीदंयाचेद्धृदयमतिपङ्केनिगलितम् द्विधाशम्भोशक्ते स्त्वयिनु खलु पश्यामि विभवम् ॥ ४ ॥ प्रधाने वर्त्तन्ते त्रिगुणविभवा श्चात्रभुवने विभोत्वंसत्वस्थाश्रयसिचरमेस्वात्मनिपदे तमोध्वस्तान् लोकान् कलयसि तु रुद्रेणवपुषा द्विधाशम्भो शक्ते स्त्वयिनु खलु पश्यामि विभवम् ॥ ५ ॥

लक्ष्मीनारायण शर्मा उपदेशक पञ्जाब धर्म्ममण्डल

फीरोजपुर शहर

## अथ सहस्रशीर्षा ।

ओ३म्-सहस्रशीर्षापुरुषः सहस्राक्षः सहस्रपात् सभूमिᳬसर्वतस्पृत्वात्यतिष्ठद्दशांगुलम् ॥ १ ॥ पुरुषएवेदᳬसर्वंयद्भूतंयच्च भाव्यम् । उतामृतत्वस्येशानोयदन्नेनातिरोहति ॥ २ ॥ एतावानस्यमहिमातो ज्यायांश्चपुरुषः । पादोस्यविश्वाभूतानि त्रिपादस्यामृतन्दिवि ॥ ३ ॥ त्रिपादूर्ध्व ऽउदैत्पुरुषः पादोस्येहाभवत्पुनः । ततो विष्वं व्यक्रामत्साशनानशनेऽअभि ॥ ४॥ ततो विराडजायतविराजोऽअधिपूरुषः सजातोऽअत्यरिच्यतपश्चाद्भूमिमथो पुरः ॥ ५ ॥ तस्माद्यज्ञात्सर्वहुतः सम्भृतम्पृषदाज्यम् ॥ पशूंस्तांश्चक्रेवायव्यानारण्याग्राम्याश्चये तस्माद्यज्ञात्सर्वहुतऋचः सामानिजज्ञिरे । छन्दाᳬसिजज्ञिरे तस्माद्यजुस्तस्मादजायत ॥७॥ तस्मादश्वाऽअजायन्तयेकेचोभयादतः । गावोह जज्ञिरे तस्मात्तस्माज्जाता ऽअजावयः ॥ ८ ॥ तंयज्ञम्बर्हिषिप्रौक्षन्पुरुषञ्जातमग्रतः ॥ तेनदेवा ऽअयजंतसाध्या ऽऋषयश्चये ॥ ६ ॥ यत्पुरुषंव्यदधुः कतिधाव्यकल्पयन् । मुखंकिमस्यासीत्किम्बाहूकिमूरूपादा ऽउच्येते ॥ १० ॥ ब्राह्मणोस्यमुखमासीद् बाहूराजन्यः कृतः । ऊरूतदस्ययद्वैश्यः पद्भ्याᳬशूद्रोऽअजायत ॥११॥ चन्द्रमामनसो जातश्चक्षोः सूर्योऽअजायत । श्रोत्राद्वायुश्च प्राणश्चमुखादग्निरजायत ॥ १२ ॥ नाभ्याऽआसीदन्तरिक्षᳬशीर्ष्णोद्यौः समवर्त्तत । पद्भ्यांभूमिर्दिशः श्रोत्रात्तथालोकाँ २॥ अकल्पयन् ॥ १३ ॥ यत्पुरुषेण हविषादेवायज्ञमतन्वत । वसन्तोस्यासीदाज्यंग्रीष्मऽइध्मः शरद्धविः ॥१४॥ सप्तास्यासन्परिधयस्त्रिः सप्तसमिधः कृताः । देवायद्यज्ञंतन्वानाऽअवध्नन्पुरुषम्पशुम् ॥ १५ ॥ यज्ञेनयज्ञमयजन्तदेवास्तानि धर्म्माणिप्रथमान्यासन् । तेहना-

नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ॥ १६ ॥ अद्भ्यः सम्भृतः पृथिव्यै रसाच्च विश्वकर्मणः समवर्त्तताग्रे। तस्य त्वष्टा विदधद्रूपमेति तन्मर्त्यस्य देवत्वमाजानमग्रे ॥ १७ ॥ वेदाहमेतम्पुरुषम्महान्तमादित्यवर्णं तमसः परस्तात् ॥ तमेव विदित्वाति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय ॥ १८ ॥ प्रजापतिश्चरति गर्भे अन्तरजायमानो बहुधा विजायते। तस्य योनिम्परिपश्यन्ति धीरास्तस्मिन्ह तस्थुर्भुवनानि विश्वा ? ॥ १९ ॥ यो देवेभ्य आतपति यो देवानाम्पुरोहितः ॥ पूर्वो यो देवेभ्यो जातो नमो रुचाय ब्राह्मये ॥ २० ॥ रुचम्ब्राह्मञ्जनयन्तो देवाऽअग्रे तदब्रुवन् ॥ यस्त्वैवम्ब्राह्मणो विद्यात्तस्य देवाऽअसन्वशे ॥ श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् ॥ इष्णन्निषाणामुम्मऽइषाण सर्वलोकम्मऽइषाण ॥ २२ ॥ हरिः ओ३म् इति सहस्रशीर्षा ॥

॥ ओंनमः शिवाय ॥

# ईश्वर प्रार्थना ( हिन्दीमें )

अयि सर्वान्तर्यामिन् ! अय परम दयालो ! पितः ! परिपूर्ण सच्चिदानन्द ! आपकी महिमा अपार है जब आपके गुणोंका वर्णन शेष नाग जैसे भी नहीं कर सकते तो हमारा तो कहना ही क्या ? आपके दया सागर का भी पार दृष्टि गोचर नहीं होता जब इस संसारमें केवल अन्धकार ही था और हम जीव कर्म करने वा भोगनेके न योग्य सूक्ष्म रूपमें पड़े निज उन्नति पथसे वञ्चित थे तब सृष्टि चक्र रचनेकी इच्छाकर परम दयालुतासे हमें आपनेही नाभि कमल द्भव ब्रह्मारूपसे कर्म भोगने वा करनेके योग्य स्थूल रूप दिया और इस विचारसे कि हम अज्ञ जीव निज धर्म्म को नजान कुकर्म प्रसक्त हो उल्टी अपनी अवनति न करले ब्रह्मारूप से उत्पन्न करनेसे पूर्व तदीय चार मुखोंसे चार वेदोंका गायन कर हमें धर्म्म मार्ग बताया है ताकि इस पर चलकर अपने पूर्व कुकर्म्मोंका फल भोगकर उन्हें एक दिन समाप्त करें और शास्त्र विहित कर्म्म उपासना ज्ञानके द्वारा निज सत्कर्मोंको उत्तरोत्तर प्रवृद्धकर जन्म मरणके परम दुःख से वा कर्मबन्धनसे छुटकर मुक्तिको प्राप्त करें वा परम शान्ति मय आपही से मिल जावें। हे विभो ! आपने इस उद्देशसे हमें उत्पन्न करते समय जो जो सम्पत्तियां दी हैं वह अनुपम वा असंख्येय हैं यदि हम शरीर रचना की ओर ही ध्यान करें तो इसकी रचना ऐसी विचित्र है कि इस जैसी रचना विना आपके और कोई न कर सकता है न कर सकेगा आपने जीवन यात्रामें सुखके लिये षट्चक्र द्वादशाधार त्रिलक्ष्य वा व्योम पञ्चक इसमें रचा है कर्णाक्षिनासिका वाक् बुद्धि रूप पञ्चज्ञानेन्द्रिय और हस्त पादत्वक् पायूपस्थ रूप पञ्च कर्मेन्द्रिय का इतने अमूल्य परमोपकारी सुख-साधन वा ज्ञान प्राप्ति द्वारों को प्रदान किया है कि हम अज्ञ जीव इनके महत्व वा गुणोंको तब भली भांति अनुभव करते हैं जब इनसे वञ्चित किसी मनुष्य वा जीव

को देखते हैं इनके सारथि मन को भी आपने ही दिया है जिसकी गति वायुसे भी प्रबल है पर आपके साथ पूर्णतया लग जाने पर यह पूर्ण निश्चल हो जाता है क्योंकि इसे आपके आगे कुछ भी प्रतीत नहीं होता आपके साथ मनके लगनेसे मनका मानसिक बल बढ़ जाता है जबकि स्थानान्तरोंमें भटकनेसे क्षण क्षण घटता जाता है इनमें प्रकाश और चैतन्य देने वाले वा रथी रूप निजांश आत्माको भी आपने ही प्रदान किया है बिना आत्माके मन इन्द्रिय वा यह पाञ्चभौतिक शरीर जड़ है कुछ भी नहीं कर सकता इस आपके अनुपम विभूतिदान के लिये हम जन्म जन्मान्तरोंमें भी यथावत् कृतज्ञता भाव आपके आगे प्रकाशित नहीं कर सकते अयि परमदयालु पितः हम कहां तक कहें आपने ही तो उत्पन्न होने के पूर्व ही माता के स्तनोंमें स्वतः मिष्ट दुग्धका प्रबन्ध किया है और यह आपकी प्रकृति वा प्राक्तन जीव संस्कार ही हैं जो उस समय इस की रक्षाके लिये इसे स्तनपानमें प्रवृत्त करते हैं इसी रीति आपने अण्डजोंके लिये नीड निर्माण वा अन्नादि कणदान भाव माता वा इनके पूर्वजोंमें सञ्चारित किया है इसी तरह उद्भिदोंकी रक्षार्थ वृष्टि जल बालातप वा वायु आदिका और स्वेदजोंको तद्रक्षा साधन रचे हैं आपने ही हमारे सुखके लिये द्रव्य गुण कर्मादि सप्तपदार्थ वा पृथिव्यादि पञ्चमहाभूतोंकी रचना की है जिनके महत्त्वका वर्णन पूर्णतया हम नहीं कर सकते किन्तु इन सब विभूतियोंके दानके लिये आपका कोटिशः धन्यवाद करके आपके चरण कमलों में बद्धाञ्जलि प्रार्थना करते हैं कि हम आपका प्राक्तन कुकर्म ग्रन्थि समाप्ति वा दिन २ सत्कर्म वृद्धिसे कर्म उपासना ज्ञानके द्वारा मोक्ष प्राप्ति रूप हमारे उत्पन्न करने का जो उद्देश्य है उसे पूर्ण कर सकें, और आपने अवतार धारण कर जो उपदेश वा मर्यादा स्थापित की है उनका यथावत् पालन कर सकें और श्री जगदम्बिका शङ्कर, विष्णु, गणनाथ सूर्यरूप पञ्चदेव वा न्यशास्त्र विहित देवताओं के भक्त बनें। श्रीराम जीवन वा श्रीकृष्ण गीतोपदेश का अंकुर हमारे हृदयक्षेत्र में सदा अनाश्यान ही दिखाई दे। यज्ञ से देवताओं का, शास्त्राध्ययन से ऋषियों का, श्राद्ध वा तर्पणादि से पितरों का, यथाशक्ति ऋण अदा करते हुए ब्रह्म देव भूत पितृ वा नृयज्ञरूप पञ्चमहायज्ञों को नित्य स्मृति करें। अभय विद्या अर्थरूप त्रिविध दानसे सत्पात्रोंको भरें, शारीरिक वाचनिक वा मानसिक तप का सेवन निज जीवन में धरें। नित्य नैमित्तिक काम्य आध्यात्मिक आधिदैविक वाधिभौतिक रूप षट्कर्म का पालन करें, ब्रह्म सगुण लीला विग्रह में से जिसके अधिकारी हों, वा देवर्षि पितृ आदि की उपासना करें। श्रवण मनन निदिध्यासन आदि ज्ञानों के वेत्ता वा अभ्यासी हों। धर्मार्थ काम मोक्ष रूप चतुर्वर्ग को निज परम मित्र वा जीवन यात्रा में परम सहायक जानें। काम, क्रोध, लोभ, मोह, रूप चतुर्वर्ग को निज परम शत्रु वा अज्ञान वा मोह निद्रा में अज्ञजीवों के आत्मसर्वस्व के लुटेरे वा डाकू जान सदा इनसे सावधान रहें, हमारा जरायुज अण्डज उद्भिद् वा

स्वेदज रूप चार प्रकार के जगत् वा अपने सम्बन्ध में जो कर्तव्य है उसे पूरा करें मातृ भक्त बने पितृ भक्त बनें, अतिथि को देवता समझें सच बोलें धर्म्म करें स्वाध्याय प्रमादी न हों शिक्षा देनेमें आलस्य न करें वर्णाश्रमधर्म का पालन करें गुरु शिष्य, पिता पुत्र, राजा प्रजा, पति पत्नी भृत्याध्यक्ष आदि व्रतोंको यथावत् धारें, सदाचारी हों, शिष्टाचार के नियमों का पालन करें, सत्सङ्ग करें कुसङ्ग से बचें, हे प्रभो ! हमें ज्ञान दो कि हमारा अन्तःकरण शुद्ध होकर आपका स्मरण भली भांति कर सकें, भक्तिदान दो कि आपको क्षणभर भी न भुलावें सदा सर्वत्र आपका भय करें और प्रत्येक कार्य्यमें शास्त्र द्वारा कृत्याकृत्य प्रवृत्ति निवृत्ति का यथावत् ऊहापोह करके उचित कार्य्य करें धर्म्मज्ञान धर्म्म कर्म्म पालन धर्म्मरक्षा हित वा ईश्वर भक्ति के अभ्यासी और प्रचारक हों, देश वा जातिके सेवक हों, हे शङ्कर विभो अन्तमें यही हमारी प्रार्थना है कि नित्यप्रति शौच स्नानोत्तर त्रिविध संध्या करें एकाग्र मन से ब्रह्म गायत्री का जप करें और इस प्रकार द्रवीभूत चित्त से आपकी यह प्रार्थना करें कि द्रवीभूत जतुमें राग के समान आप हमारे अन्तःकरण में सदा के लिये खचित हो जावें और शनैः शनैः हम और आप भृङ्गी कीट न्याय से एकमय होते हुए अन्त में हम आपही में मिल जावें ।

हरिओंतत्सत् ब्रह्मणेनमः तनोतु नः शिवः शिवम् शान्तिः ॥ ३ ॥

आत्मात्वंगिरिजामतिः सहचराः प्राणः शरीरंगृहम् पूजाते विषयोप भोगरचनानिद्रा समाधिस्थितिः ॥ सञ्चारः पदयोः प्रदक्षिणविधिस्तोत्राणि सर्वागिरो यद्यत्कर्म्म करोमि तत्तदखिलं शम्भो तवाराधनम् ॥ प्रार्थना समाप्तिः ॥

## श्रीकृष्ण आरती ।

जय जय जय विभु कृष्ण मुरारे । जय जय प्रभु नन्ददुलारे ( टेक )

दोहा—नन्द यशोदा जब कियो तप देवकि वसुदेव । तुम वांछित पूर्ण किओ कष्ट निवारण भेव ॥ भक्तों के पालन हारे जय० ॥ १ ॥ दुष्ट कंस जब दुःख दी पूज्य देवकी भ्रात । तब लीनों अवतार तुम दुष्ट चूरकरि गात ॥ दुष्टों के प्राण संहारे जय० ॥ २ ॥ सीता सखियन राम में योगी ऋषि मुनि नेक । वर मांगो जो गोपिका उस पूरे तुम एक ॥ भक्त वत्सल व्रत धारे जय० ॥३॥ गोरक्षा का परम धर्म्म है भारत हितकारि । गोपाल व्रत तुम लियो वन वन गऊअन चारि ॥ गऊअन के रखवारे जय० ॥ ४ ॥ भारत में जब रण भयो दुर्योधन जिसमूल । अर्जुन के बने सारथि खड़े सरस्वति कूल ॥ भक्तन के हितकारे जय० ॥ ५ ॥ अर्जुन मोह भयो जब ज्ञानरु आत्म विवेक । गीता में उपदेश दी भरि भरि तत्व अनेक ॥ स्तुति को जिस कवि हारे जय० ॥ ६ ॥ क्रोध कीन जब इन्द्र ने ब्रज के ऊपर वारि । गोवर्धन तब तुम लियो अंगुलि रक्षा कारि ।

॥ अभिमानी मान निवारे जय० ॥ ७ ॥ अभिमानी ब्रह्म अगे श्रुतिगन से करि हास शास्त्रचाल तव मुरल से नाश छोम भूपाल ॥ भव के भार उतारे जय० दीनानाथ प्रभु प्यारे जय० ॥ ८ ॥

## न्यायकुसुमाञ्जलिकारस्येश्वरसिद्धिकारिका व्याख्या ।

कार्य्यायोजनधृत्यादेः पदात् प्रत्ययतः श्रुतेः । वाक्यात्संख्याविशेषाच्चासाध्योविश्वविदव्ययः । कार्यं यथाक्षित्यङ्कुरादिकं कार्य्यं कर्तृजन्यं कार्य्यत्वाद् कुलालकर्तृकघटादिवत् सर्वकर्त्ता ईश्वरं विना नान्यो भवितुमर्हति कश्चिज्जीवः जीवोत्पत्तेः प्रागपि तस्य दृष्टत्वादधुनापि च जीवकर्तृत्वाभावे च तस्य दर्शनात् । आयोजनं कर्म्म यथा सर्गाद्यकालीनद्व्यणुकप्रयोजकं कर्म्म ईश्वरप्रयत्नसापेक्षं यत्नसापेक्षकर्म्मत्वात् तत्काले पुरुषान्तराभावाच्च । धृतिर्यथा गुरुत्ववतां ग्रहनक्षत्रादीनां पतनाभावः पतनप्रतिबन्धकप्रयत्नप्रयुक्तः धृतत्वात्पक्षिपतनाभाववत् । आदिपदेनैषामुच्छृङ्खलग्रहाणां मिथः कारणमन्तरैव यदा कदापि कलहाभावः नियतकाले नियतकृतिः शक्तिनियमादयश्च बोद्धव्याः । पदात्-यथा पद्यते गम्यते अनेनेति पदं व्यवहारः । घटादिशब्दव्यवहारः । स्वतन्त्रपुरुषप्रयोज्यः व्यवहारत्वात् आधुनिककल्पितलिप्यादिवत् । प्रत्ययोज्ञानं-वेदजन्यप्रमावक्तुर्यथार्थवाक्यार्थज्ञानजन्या शाब्दप्रमाणत्वात् चैत्रवाक्यजन्यप्रमावत् । श्रुतिर्वेदः-वेदः असांसारिकपुरुषप्रणीतः वेदत्वात् यन्नैवं तन्नैवं यथा काव्यम् । व्यतिरेकदृष्टान्तः । अन्वये भारतवत् यथा वेदः पौरुषेयः काव्यत्वाद्भारतवत् ॥ वाक्यात्-वेदे वाक्यं सकर्तृकमाधुनिकरचितवाक्यवत् । संख्याविशेषात्-द्व्यणुकपरिमाणजनिका संख्या अपेक्षाबुद्धिजन्या एकत्वान्यसंख्यात्वाद्द्विघटनिष्ठद्वित्वसंख्यावत् । एवमेभ्यो हेतुभ्यो विश्ववित्सर्वज्ञोऽव्ययोऽक्षरः परमेश्वरः साध्योऽनुमेयः ॥

## श्रीजगदम्बिकास्तुतिः ।

विश्वेश्वरीं जगद्धात्रीं स्थितिसंहारकारिणीम् । निद्रां भगवतीं विष्णोरतुलां तेजसः प्रभुः । ब्रह्मोवाच । त्वं स्वाहा त्वं स्वधा त्वं हि वषट्कारः स्वरात्मिका । सुधा त्वमक्षरे नित्ये त्रिधामात्रात्मिका स्थिता । अर्धमात्रा स्थिता नित्या यानुच्चार्या विशेषतः । त्वमेव सन्ध्या सावित्री त्वं देवि जननी परा । त्वयैतद्धार्यते विश्वं त्वयैतत् सृज्यते जगत् ॥ त्वयैतत्पाल्यते देवि ! त्वमत्स्यन्ते च सर्वदा । विसृष्टौ सृष्टिरूपा त्वं स्थितिरूपा च पालने । तथा संहृतिरूपान्ते जगतोऽस्य जगन्मये । महाविद्या महामाया महामेधा महास्मृतिः । महामोहा च भवती महादेवी महेश्वरी । प्रकृतिस्त्वं च सर्वस्य गुणत्रय विभाविनी । कालरात्रिर्महारात्रि र्मोहरात्रिश्च दारुणा । त्वं श्रीस्त्वमीश्वरी त्वं ह्रीस्त्वं बुद्धिर्बोधलक्षणा ॥ लज्जा पुष्टिस्तथा तुष्टिस्त्वं शान्तिः क्षान्तिरेव च ।

खड्गिनी शूलिनी घोरा गदिनी चक्रिणी तथा। शङ्खिनी चापिनी बाण-भुशुण्डी परिघायुधा। सौम्या सौम्यतराशेषासौम्येभ्यस्त्वतिसुन्दरी। परापराणां परमा त्वमेव परमेश्वरी। यच्च किञ्चित्क्वचिद्वस्तु सदसद्वाखिलात्मिके। तस्य सर्वस्य या शक्तिः सा त्वं किं स्तूयसे मया॥ यया त्वया जगत्स्रष्टा जगत्पात्यत्ति यो जगत्। सोऽपिनिद्रा वशं नीतः कस्त्वां स्तोतुमिहेश्वरः॥ विष्णुः शरीरग्रहणमहमीशान एव च। कारितास्ते यतोऽतस्त्वां कः स्तोतुं शक्तिमान् भवेत्। सा त्वमित्थं प्रभावैस्वैरुदारैर्देवि! संस्तुता। मोहयेतौ दुराधर्षावसुरौ मधुकैटभौ॥ प्रबोधञ्च जगत्स्वामी नीयतामच्युतो लघु। बोधश्च क्रियतामस्य हन्तुमेतौ महासुरौ॥ अपराधक्षमापन स्तोत्रम्। न मन्त्रं नो यन्त्रं तदपि च न जाने स्तुतिमहो। न चाह्वानं ध्यानं तदपि च न जाने स्तुतिकथाः॥ न जाने मुद्रास्ते तदपि च न जाने विलपनं परं जाने मातस्त्वदनुसरणं क्लेशहरणम्॥१॥ विधेरज्ञानेन द्रविणविरहेणालसतया विधेयाशक्यत्वात्तव चरणयोर्याच्युतिरभूत्॥ तदेतत् क्षन्तव्यं जननि! सकलोद्धारिणि शिवे कुपुत्रो जायेत क्वचिदपि कुमाता न भवति॥२॥ पृथिव्यां पुत्रास्ते जननि! बहवः सन्ति सरलाः। परं तेषां मध्ये विरलतरलोऽहं तव सुतः॥ मदीयोयं त्यागः समुचितमिदं नो तव शिवे। कुपुत्रो०॥३॥ जगन्मातर्मातस्तव चरणसेवा न रचिता। नवा दत्तं देवि द्रविणमपि भूयस्तवमया। तथापि त्वं स्नेहं मयि निरुपमं यत्प्रकुरुषे। कुपुत्रो०॥४॥ परित्यक्त्वा देवान् विविधविधसेवाकुलतया। मया पञ्चाशीतेरधिकमपनीते तु वयसि इदानीं चेन्मातस्तव यदि कृपा नापि भविता निरालम्बो लम्बोदरजननि कं यामि शरणम्॥५॥ श्वपाको जल्पाको भवति मधुपाकोपमगिरा निरातङ्को रङ्को विहरति चिरं कोटिकनकैः। तवापर्णे कर्णे विशति मनुवर्णे फलमिदं। जनः को जानीते जननि जपनीयं जपविधौ॥६॥ चिताभस्मालेपो गरलमशनं दिक्पटधरो। जटाधारी कण्ठे भुजगपतिहारी पशुपतिः॥ कपाली भूतेशो भजति जगदीशैकपदवीं भवानि! त्वत्पाणिग्रहणपरिपाटीफलमिदम्॥७॥ न मोक्षस्याकाङ्क्षा न च विभववाञ्छापि च न मे, न विज्ञानापेक्षा शशिमुखिसुखेच्छापि न पुनः॥ अतस्त्वां संयाचे जननि! जननं यातु मम वै मृडानी रुद्राणी शिव शिव भवानीति जपतः॥ ८ ॥ नाराधितासि विधिना विविधोपचारैः किं रुक्षचिन्तपरैर्नकृतं वचोभिः। श्यामे त्वमेव यदि किञ्चन मय्यनाथे धत्से कृपामुचितमम्ब परं तवैव॥ ९ ॥ आपत्सु मग्नः स्मरणं त्वदीयं करोमि दुर्गे करुणार्णवेशिवे। नैतच्छठत्वं मम भावयेथाः क्षुधातृषार्ता जननीं स्मरन्ति॥ १० ॥ जगदम्ब विचित्रमत्र किं परिपूर्णा करुणास्ति चेन्मयि। अपराधपरम्परावृतं नहि माता समुपेक्षते सुतम्॥ ११ ॥ मत्समः पातकी नास्ति पापघ्नी त्वत्समा नहि। एवं ज्ञात्वा महादेवि! यथायोग्यं तथा कुरु॥१२॥

# श्रीशिवमहिम्नः स्तोत्रप्रारम्भः

महिम्नः पारं ते परमविदुषो यद्यसदृशी, स्तुतिर्ब्रह्मादीनामपितदवसन्नास्त्वयि गिरः।
अथावाच्यः सर्वः स्वमतिपरिणामावधि गृणन्, ममाप्येष स्तोत्रे हर निरपवादः परिकरः॥१
अतीतः पन्थानं तव च महिमा वाङ्मनसयो रतद्व्यावृत्त्या यं चकितमभिधत्ते श्रुतिरपि।
सकस्यस्तोतव्यः कतिविधगुणःकस्य विषयः, पदेत्वर्वाचीने पततिनमनःकस्यनवचः॥
मधुस्फीतावाचः परममृतं निर्मितवत, स्तवब्रह्मन् किंवागपिसुरगुरोर्विस्मयपदम्।
ममत्वेनांवाणीं गुणकथनपुण्येन भवतः, पुनामीत्यर्थेऽस्मिन्पुरमथनबुद्धिर्व्यवसिता॥
तवैश्वर्यं यत्तज्जगदुदयरक्षाप्रलयकृत्, त्रयीवस्तुव्यस्तं तिसृषुगुणभिन्नासुतनुषु।
अभव्यानामस्मिन्वरदरमणीयामरमणीं विहन्तुंव्याक्रोशीं विदधत इहैकेजडधियः॥ ४॥
किमीहः किंकायः सखलुकिमुपायस्त्रिभुवनं, किमाधारोधाता सृजतिकिमुपादानइतिच।
अतर्क्यैश्वर्ये त्वय्यनवसरदुःस्थोहतधियः, कुतर्कोयंकांश्चिन्मुखरयतिमोहायजगतः॥५॥
अजन्मानोलोकाः किमवयववन्तोऽपिजगता, मधिष्ठातारं किं भवविधिरनादृत्यभवति।
अनीशोवाकुर्याद्भुवनजनने कः परिकरो, यतोमन्दास्त्वां प्रत्यमरवरसंशेरतइमे॥ ६॥
त्रयीसांख्यंयोगः पशुपतिमतंवैष्णवमिति प्रभिन्ने प्रस्थाने परमिदमदःपथ्यमिति च।
रुचीनांवैचित्र्यादृजुकुटिलनानापथजुषां नृणामेकोगम्यस्त्वमसिपयसामर्णवइव॥७॥
महोक्षः खट्वाङ्गं परशुरजिनं भस्म फणिनः, कपाल चेतीयत्तव वरद तन्त्रोपकरणम्।
सुरास्तां तामृद्धिं विदधति भवद्भ्रूप्रणिहिता, नहिस्वात्मारामं विषयमृगतृष्णा भ्रमयति८
ध्रुवं कश्चित् सर्वं सकलमपरस्त्वध्रुवमिदं, परोध्रौव्याध्रौव्ये जगति गदति व्यस्त विषये॥ समस्तेप्येतस्मिन् पुरमथन तैर्विस्मित इव स्तुवन् जिह्मेमि त्वां नखलु ननु धृष्टा मुखरता॥ ९॥ तवैश्वर्यं यत्नाद्यदुपरि विरिंचो हरिरधः। परिच्छेत्तुं याता वनलमनिलस्कन्धवपुषः॥ ततो भक्तिश्रद्धाभरगुरुगृणद्भ्यां गिरिशयत्। स्वयं तस्थे ताभ्यां तवकिमनुवृत्तिर्न फलति॥१०॥ अयत्नादापाद्य त्रिभुवनमवैरिव्यतिकरं दशास्योयद्बाहूनभृत रणकण्डूपरवशान्॥ शिरः पद्म श्रेणी रचित चरणाम्भोरुह-बलेः। स्थिरायास्त्वद्भक्तेस्त्रिपुरहरविस्फूर्जितमिदम्॥ ११॥ अमुष्यत्वत्सेवा समधिगतसारं भुजवनम्। बलात्कैलासेऽपि त्वदधिवसतौ विक्रमयतः॥ अलभ्या पाताले प्यलसचलितांगुष्ठ शिरसि प्रतिष्ठा त्वय्यासीद्ध्रुवमुपचितो मुह्यति खलः॥१२॥ यदृद्धिं सुत्राम्णो वरदपरमोच्चैरपि सती-मधश्चक्रे बाणः परिजन विधेयस्त्रिभुवनः। नतच्चित्रं तस्मिन् वरिवसितरित्वच्चरणयोर्नकस्याउन्नत्यै भवति शिरसस्त्वय्यवनतिः॥ १३॥ अकाण्डब्रह्माण्डक्षयचकितदेवासुरकृपा। विधेयस्यासीद्यस्त्रिनयन विषंसंहृतवतः॥ सकल्माषःकण्ठे तवनकुरुतेन श्रियमहो। विकारोपि श्लाघ्यो भुवनभयभंग व्यसनिनः॥ १४॥ असिद्धार्था नैव क्वचिदपि सदेवासुरनरे। निवर्तन्ते

नित्यं जगति जयिनो यस्य विशिखाः स पश्यन्नीश त्वामितरसुरसाधारणमभूत् । स्मरः-स्मर्तव्यात्मा नहि वशिषु पथ्यः परिभवः ॥ १५ ॥ मही पादाघाताद्व्रजति सहसा संशयपदम् । पदं विष्णोर्भ्राम्यद्भुजपरिघरुग्णग्रहगणम् मुहुर्द्यौर्दौस्थ्यं यात्यनिभृत-जटाताडिततटा जगद्रक्षायै त्वं नटसि ननु वामैव विभुता ॥ १६ ॥ वियद्व्यापी तारागणगुणितफेनोद्गमरुचिः । प्रवाहो वारां यः पृषतलघुदृष्टः शिरसि ते ॥ जगद्द्वीपाकारं जलधिवलयन्तेन कृतमि-त्यनेनैवोन्नेयं धृतमहिमदिव्यं तव वपुः ॥ १७ ॥ रथः क्षोणी यन्ता शतधृतिरगेन्द्रो धनुरथो । रथाङ्गे चन्द्रार्कौ रथचरणपाणिः शर इति । दिधक्षोस्ते कोयं त्रिपुरतृणमाडम्बरविधिर्विधेयैः क्रीडन्त्यो न खलु परतन्त्राः प्रभुधियः ॥१८॥ हरिस्ते साहस्रं कमलबलिमाधाय पदयोर्यदेकोने तस्मिन्निजमुदहरन्नेत्रकमलम् । गतो भक्त्युद्रेकः परिणतिमसौ चक्रवपुषा । त्रयाणां रक्षायै त्रिपुरहर जागर्ति जगताम् ॥१९॥ क्रतौ सुप्ते जाग्रत्त्वमसि फलयोगे क्रतुमतां क्व कर्म प्रध्वस्तं फलति पुरुषाराधनमृते अतस्त्वां संप्रेक्ष्य क्रतुषु फलदानप्रतिभुवं श्रुतौ श्रद्धां बध्वा दृढपरिकरः कर्मसु जनः २० क्रियादक्षो दक्षः क्रतुपतिरधीशस्तनुभृतामृषीणामार्त्विज्यं शरणद सदस्याः सुरगणाः क्रतुभ्रेषस्त्वत्तः क्रतुफलविधानव्यसनिनो ध्रुवं कर्तुः श्रद्धाविधुरमभिचाराय हि मखाः ॥ २१ ॥ प्रजानाथं नाथ प्रसभमभिकं स्वां दुहितरं गतं रोहिद्भूतां रिरमयिषुमृष्यस्य वपुषा । धनुष्पाणेर्यातं दिवमपि सपत्राकृतममुं त्रसंतं तेऽद्यापि त्यजति न मृगव्याधरभसः ॥२२॥ स्वलावण्याशंसा धृतधनुषमह्नाय तृणवत्पुरः प्लुष्टं दृष्ट्वा पुरमथन पुष्पायुधमपि । यदि स्त्रैणं देवी यमनिरतदेहार्धघटनादवैति त्वामद्धा बत वरद मुग्धा युवतयः ॥ २३ ॥ श्मशानेष्वाक्रीडा स्मरहर पिशाचाः सहचराश्चिताभस्मालेपः स्रगपि नृकरोटीपरिकरः । अमंगल्यं शीलं तव भवतु नामैवमखिलं तथाऽपि स्मर्तॄणां वरद परमं मंगलमसि ॥ २४ ॥ मनः प्रत्यक्चित्ते सविधमवधायात्तमरुतः प्रहृष्यद्रोमाणः प्रमदसलिलोत्संगितदृशः । यदालोक्याह्लादं ह्रद इव निमज्ज्यामृतमये दधत्यन्तस्तत्त्वं किमपि यमिनस्तत्किल भवान् ॥ २५ ॥ त्वमर्कस्त्वं सोमस्त्वमसि पवनस्त्वं हुतवहस्त्वमापस्त्वं व्योमस्त्वमु धरणिरात्मा त्वमिति च । परिच्छिन्नामेवं त्वयि परिणता बिभ्रति गिरं न विद्मस्तत्तत्त्वं वयमिह तु यत्त्वं न भवसि ॥ २६ ॥ त्रयीं तिस्रो वृत्तीस्त्रिभुवनमथो त्रीनपि सुरानकाराद्यैर्वर्णैस्त्रिभिरभिदधत्तीर्णविकृति । तुरीयं ते धाम ध्वनिभिरवरुन्धानमणुभिः समस्तं व्यस्तं त्वां शरणद गृणात्योमिति पदम् ॥२७॥ भवः शर्वो रुद्रः पशुपतिरथोग्रः सह महांस्तथा भीमेशानाविति यदभिधानाष्टकमिदम् । अमुष्मिन्प्रत्येकं प्रविचरति देव श्रुतिरपि प्रियायास्मै धाम्ने प्रविहितनमस्योऽस्मि भवते ॥२८॥ नमो नेदिष्ठाय प्रियदव दविष्ठाय च नमो नमः क्षोदिष्ठाय स्मरहर महिष्ठाय च नमः । नमो वर्षिष्ठाय त्रिनयन यविष्ठाय च नमो नमः सर्वस्मै ते तदिदमितिसर्वाय च नमः ॥ २९ ॥ बहुलरजसे विश्वोत्पत्तौ भवाय नमो नमः प्रबलतमसे तत्संहारे हराय नमो नमः । जनसुखकृते सत्त्वोद्रिक्तौ मृडाय नमो नमः प्रमहसि पदे निस्त्रैगुण्ये शिवा-

वाय नमो नमः ॥ ३० ॥ कृशपरिणति चेतः क्लेशवश्यं क्व चेदं क्व च तव गुणसीमोल्लङ्घिनी शश्वदृद्धिः । इति चकितममन्दीकृत्य मां भक्तिराधाद्वरद चरणयोस्ते वाक्यपुष्पोपहारम् ॥ ३१ ॥ असितगिरिसमं स्यात्कज्जलं सिन्धुपात्रे सुरतरुवरशाखा लेखनी पत्रमुर्वी । लिखति यदि गृहीत्वा शारदा सर्वकालं तदपि तव गुणानामीश पारं न याति ॥ ३२ ॥ असुरसुरमुनीन्द्रैरर्चितस्येन्दुमौलेर्ग्रथितगुणमहिम्नो निर्गुणस्येश्वरस्य । सकलगुणवरिष्ठः पुष्पदन्ताभिधानो रुचिरमलघुवृत्तैः स्तोत्रमेतच्चकार ॥ ३३ ॥ अहरहरनवद्यं धूर्जटेः स्तोत्रमेतत्पठति परमभक्त्या शुद्धचित्तः पुमान्यः । स भवति शिवलोके रुद्रतुल्यस्तथात्र प्रचुरतरधनायुः पुत्रवान्कीर्तिमांश्च ॥३४॥ महेशान्नापरो देवो महिम्नो नापरा स्तुतिः । अघोरान्नापरो मन्त्रो नास्ति तत्त्वं गुरोः परम् ॥ ३५ ॥ दीक्षा दानं तपस्तीर्थं ज्ञानं यागादिकाः क्रियाः । महिम्नस्तव पाठस्य कलां नार्हन्ति षोडशीम् ॥ ३६ ॥ कुसुमदशननामा सर्वगन्धर्वराजः शशिधरवरमौलेर्देवदेवस्य दासः । स गुरुनिजमहिम्नो भ्रष्ट एवास्य रोषात्स्तवनमिदमकार्षीद्दिव्यदिव्यं महिम्नः ॥ ३७ ॥ सुरवरमुनिपूज्यं स्वर्गमोक्षैकहेतुं पठति यदि मनुष्यः प्राञ्जलिर्नान्यचेताः । व्रजति शिवसमीपं किंनरैः स्तूयमानः स्तवनमिदममोघं पुष्पदंतप्रणीतम् ॥ ३८ ॥ श्रीपुष्पदंतमुखपंकजनिर्गतेन स्तोत्रेण किल्बिषहरेण हरप्रियेण । कण्ठस्थितेन पठितेन समाहितेन सुप्रीणितो भवति भूतपतिर्महेशः ॥ ३९ ॥ इत्येषा वाङ्मयी पूजा श्रीमच्छङ्करपादयोः । अर्पिता तेन देवेशः प्रीयतां मे सदाशिवः ॥ ४० ॥ इति श्रीपुष्पदन्तविरचितं शिवमहिम्नः स्तोत्रं सम्पूर्णम् ॥

# वेदसारशिवस्तवः ।

श्रीगणेशाय नमः ॥ पशूनां पतिं पापनाशं परेशं गजेंद्रस्य कृत्तिं वसानं वरेण्यम् । जटाजूटमध्ये स्फुरद्गांगवारिं महादेवमेकं स्मरामि स्मरारिम् ॥ १ ॥ महेशं सुरेशं सुरारातिनाशं विभुं विश्वनाथं विभूत्यंगभूषम् । विरूपाक्षमिन्द्वर्कवह्नित्रिनेत्रं सदानंदमीडे प्रभुं पंचवक्त्रम् ॥ २ ॥ गिरीशं गणेशं गले नीलवर्णं गवेन्द्राधिरूढं गणातीतरूपम् । भवं भास्वरं भस्मना भूषिताङ्गं भवानीकलत्रं भजे पञ्चवक्त्रम् ॥३॥ शिवाकान्त शम्भो शशाङ्कार्धमौले महेशान शूलिन् जटाजूटधारिन् । त्वमेको जगद्व्यापको विश्वरूप प्रसीद प्रसीद प्रभो पूर्णरूप ॥ ४ ॥ परात्मानमेकं जगद्बीजमाद्यं निरीहं निराकारमोंकारवेद्यम् । यतो जायते पाल्यते येन विश्वं तमीशं भजे लीयते यत्र विश्वम् ॥ ॥ ५ ॥ न भूमिर्न चापो न वह्निर्न वायुर्न चाकाशमास्ते न तन्द्रा न निद्रा । न ग्रीष्मो न शीतं न देशो न वेशो न यस्यास्ति मूर्तिस्त्रिमूर्तिं तमीडे ॥ ६ ॥ अजं शाश्वतं कारणं कारणानां शिवं केवलं भासकं भासकानाम् । तुरीयं तमःपारमाद्यन्तहीनं प्रपद्ये परं पावनं द्वैतहीनं ॥ ७ ॥ नमस्ते नमस्ते विभो विश्वमूर्ते नमस्ते नमस्ते चिदानन्दमूर्ते । नमस्ते नमस्ते तपोयोगगम्य नमस्ते नमस्ते श्रुतिज्ञानगम्य ॥८॥ प्रभो शूलपाणे विभो

विश्वनाथ महादेव शम्भो महेश त्रिनेत्र शिवाकांत शांत स्मरारे पुरारे त्वदन्यो वरेण्यो न मान्यो न गण्यः ॥ ९ ॥ शंभो महेश करुणामय शूलपाणे गौरीपते पशुपते पशुपाशनाशिन् । काशीपते करुणया जगदेतदेकस्त्वं हंसि पासि विदधासि महेश्वरोऽसि ॥ १० ॥ त्वत्तो जगद्भवति देव भव स्मरारे त्वय्येव तिष्ठति जगन्मृड विश्वनाथ । त्वय्येव गच्छति लयं जगदेतदीश लिङ्गात्मकं हर चराचरविश्वरूपिन् ॥ ११ ॥ इति श्रीमच्छङ्कराचार्यविरचितं वेदसारशिवस्तोत्रं सम्पूर्णम् ॥

# शिवभुजङ्गप्रयातस्तोत्रम् ।

श्रीगणेशाय नमः । गलद्दानगण्डं मिलद्भृङ्गखण्डं चलच्चारुशुण्डं जगत्त्राणशौण्डम् । लसद्दन्तकाण्डं विपद्भंगचण्डं शिवप्रेमपिण्डं भजे वक्रतुण्डम् ॥१॥ अनाद्यन्तमाद्यं परं तत्त्वमर्थं चिदाकारमेकं तुरीयं त्वमेयम् । हरिब्रह्ममृग्यं परब्रह्मरूपं मनोवागतीतं महः शैवमीडे ॥ २ ॥ स्वशक्त्यादिशक्त्यन्तसिंहासनस्थं मनोहारि सर्वांगरत्नादिभूषम् । जटाहींदुगंगास्थिशश्यर्कमौलिं परं शक्तिमित्रं नुमः पञ्चवक्त्रम् ॥३॥ शिवेशानतत्पूरुषाघोरवामादिभिर्ब्रह्मभिर्हृन्मुखैः षड्भिरंगैः । अनौपम्यषट्त्रिंशतं तत्त्वविद्यामतीतं परं त्वां कथं वेत्ति को वा ॥ ४ ॥ प्रवालप्रवाहप्रभाशोणमर्धं मरुत्वन्मणिश्रीमहः श्याममर्धम् । गुणस्यूतमेकं वपुश्चैकमन्तः स्मरामि स्मरापत्तिसंपत्तिहेतुम् ॥ ५ ॥ स्वसेवासमायातदेवासुरेन्द्रानमन्मौलिमन्दारमालाभिषिक्तम् । नमस्यामि शंभो पदाम्भोरुहं ते भवांभोधिपोतं भवानीविभाव्यम् ॥ ६ ॥ जगन्नाथ मन्नाथ गौरीसनाथ प्रपन्नानुकम्पिन्विपन्नार्तिहारिन् । महः स्तोममूर्ते समस्तैकबन्धो नमस्ते नमस्ते पुनस्ते नमोऽस्तु ॥ ७ ॥ महादेव देवेश देवादिदेव स्मरारे पुरारे यमारे हरेति । ब्रुवाणः स्मरिष्यामि भक्त्या भवन्तं ततो मे दयाशील देव प्रसीद ॥ ८ ॥ विरूपाक्ष विश्वेश विद्यादिकेश त्रयीमूल शम्भो शिव त्र्यम्बकत्वम् । प्रसीद स्मर त्राहि पश्यावमुक्त्यै क्षमां प्राप्नुहीति क्षपा हि क्षिपामः ॥ ९ ॥ त्वदन्यः शरण्यः प्रपन्नस्य नेति प्रसीद स्मरन्नेव हन्यास्तु दैन्यम् । न चेत्ते भवेद्भक्तवात्सल्यहानिस्ततो मे दयालो दयां सन्निधेहि ॥ १० ॥ अयं दानकालस्त्वहं दानपात्रं भवान्नाथ दाता त्वदन्यं न याचे । भवद्भक्तिमेव स्थिरां देहि मह्यं कृपाशील शंभो कृतार्थोस्मि तस्मात् ॥ ११ ॥ पशुं वेत्सि चेन्मां त्वमेवाधिरूढः कलंकीति वा मूर्ध्नि धत्से त्वमेव । द्विजिह्वः पुनः सोपि ते कंठभूषा त्वदङ्गीकृताः शर्व सर्वेऽपि धन्याः ॥ १२॥ न शक्नोमि कर्तुं परद्रोहलेशं कथं प्रीयसे त्वं न जाने गिरीश । तदा हि प्रसन्नोसि कस्यापि कान्तासुतद्रोहिणो वा पितृद्रोहिणो वा ॥ १३ ॥ स्तुतिं ध्यानमर्चां यथावद्विधातुं भजन्नप्यजानन्महेशावलम्बे । त्रसंतं सुतं त्रातुमग्रे मृकंडोर्यमप्राणनिर्वापणं त्वत्पदाब्जम् ॥ १४ ॥ अकंठे कलंकादनङ्गे भुजङ्गादपाणौ कपालादभालेऽनलाक्षात् । अमौलौ शशांकादवामे कलत्रादहं देवमन्यं न मन्ये न मन्ये ॥ १५ ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छङ्कराचार्यविरचितं श्रीशिवभुजंगप्रयातस्तोत्रं संपूर्णम् ॥

